ॐ नमः परमात्मने

# सांख्य दर्शनम् ॥

## महर्षिकपिलमुनिप्रणीतं

महादेव वेदान्तिकृतवृत्ति सहितम् ।

पण्डित कृपारामशर्म्मणा काश्याममर यन्त्रा-
लये मुद्रयित्वा प्रकाशितम् ॥

यह पुस्तक तिमिरनाशक प्रेस या पण्डित कृपाराम शर्म्मा की
दूकान पर लाइब्रेरी के सामने मिलेगी ॥

सं० १९४६

प्रथमबार १००० जिल्द मूल्य ॥/)

# अथ साङ्ख्यसूत्रवृत्तिः ॥

श्रीगणेशाय नमः ॥

दृष्ट्वानिरुद्धवृत्तिं बुध्वा साङ्खीयसिद्धान्तम् ।
विरचयति वृत्तिसारं वेदान्तवादिर्महादेवः ॥ १ ॥

अथ जगदुद्दिधीर्षुर्महामुनिः कपिलः फलसौंदर्य्यज्ञानस्य फलेच्छाद्वारासाधनप्रवृत्तौ करणत्वं पश्यन् फलसौंदर्य्यमाह ।

**अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः ॥१॥**

अथशब्दो मङ्गलार्थः त्रिविधस्य दुःखस्याध्यात्मिकाधिभौतिकाधिदैविकरूपस्यात्यन्तनिवृत्तिः पुनर्दुःखजातीयानुत्पत्तिविशिष्टानिवृत्तिरत्यन्तपुरुषार्थः धर्मार्थकाममोक्षेषु चतुर्षु पुरुषार्थेषु मध्ये श्रेष्ठः पुरुषार्थ इत्यर्थः त्रयाणां क्षयित्वान्मोक्षस्यात्ननिवृत्तिरूपस्याक्षयित्वादिति भावः तत्राध्यात्मिकं दुःखं शारीरं मानसञ्च शारीरं वातपित्तश्लेष्मवैषम्यनिमित्तं मानसं कामक्रोधलोभमोहेर्ष्यादिजनितं उभयोरप्यान्तरोपायसाध्यत्वादाध्यात्मिकत्वंअत एवान्तरमिदमित्याचक्षते । आधिभौतिकं पशुपक्षिस्थावरादिनिमित्तम् । आधिदैविकं ग्रहादिनिमित्तम् । द्विविधमिदं वाह्यमित्याचक्षते नन्वस्तु त्रानिवृत्तिरत्यन्तपुरुषार्थः तथापि सत्वपुरुषान्यताख्यातिरूपतत्त्वज्ञानहेतुशास्त्रप्रवृत्तौ को हेतुः शारीरदुःखनिवर्तकानामौषधादीनां मानसदुःखनिवर्त्तकानां वरस्त्रीमिष्टान्नादीनां आधिभौतिकदुःखनिवर्त्तकानां नीतिशास्त्रोपदिष्टनिरत्ययस्थानाध्या-

सनादीनां आधिदैविकदुःखनिवर्त्तकानां मणिमन्त्रमहौषधादीनां च सुकराणां सत्वेऽनेकजन्मपरम्परायाससाध्यतत्वज्ञानेऽतिदुःष्करे प्रवृत्तेर्दुर्लभत्वेन शास्त्रप्रवृत्तेर्दुर्लभतरत्वादत आह ।

*न दृष्टात्तत्सिद्धिर्निवृत्तेरप्यनुवृत्तिदर्शनात् ॥२॥

दृष्टात् उक्तौषधादिरूपात्तत्सिद्धिः दुःखात्यन्तनिवृत्तिसिद्धिः न भवति कुतः निवृत्तेः दुःखनिवृत्तेरनन्तरमिति शेषः अनुवृत्तिदर्शनादपि दुःखजातीयोत्पत्तिदर्शनादपि अयं भावः नोक्तैरुपायैर्दुःखानुत्पत्तिविशिष्टादुःखनिवृत्तिर्भवति तत्तदुपायैस्तत्तद्दुःखेषु नष्टेष्वपि दुःखान्तरोत्पत्तिदर्शनात् तस्मादसुकरत्वेऽपि तत्वज्ञानमेषितव्यमिति ननु माभूदौषधादिभिः पूर्वैर्भाविदुःखनिवृत्तिस्तथापि पुनःपुनः प्रतीकारकरणे तु भाविदुःखनिवृत्तिरपि स्यादिति शङ्कते ।

*प्रात्यहिकक्षुत्प्रतीकारवत्तत्प्रतीकारचेष्टनात् पुरुषार्थत्वम् ॥३॥

यदा दुःखमुत्पत्स्यते तदा तत्प्रतिकर्त्तव्यं तथाच दुःखनिवृत्तिः पुरुषार्थः यथा यदा क्षुत्तदाभोक्तव्यं भुञ्जानस्य क्षुन्निवृत्तिः पुरुषार्थ इति सिद्धान्तयति ।

*सर्वासम्भवात्संभवेपि सत्तासम्भवाद्धेयः प्रमाणकुशलैः ॥४॥

न हि सर्वस्मिन्देशे सर्वस्मिन् काले वैद्यादयः सन्ति सम्भ

पि सत्वेऽपि वैद्यादीनां सत्तासम्भवात् दुःखसत्तासम्भव इति न सर्वथा दुःखाद्विमोकः तस्मात् प्रमाणकुशलैः ईदृग्विधः पुरुषार्थो हेयः युक्त्यन्तरमाह ।

*उत्कर्षादपि मोक्षस्य सर्वोत्कर्षश्रुतेः ॥५॥

न तैस्तै रुपायैस्तत्तद्दुःखोच्छेदे यतितव्यं मोक्षस्यनित्यत्वे न सर्वदुःखोच्छेदरूपत्वेनोत्कर्षात् आत्मलाभान्न परं विद्यत इति सर्वोत्कर्षश्रुतेरपि तत्साधनेतत्त्वज्ञ।न एव पायतितव्यं ननु मोक्ष इत्युक्तो बन्धादिति प्रतीयते स च बन्धः किं स्वाभाविक उतागन्तुकः आद्यनाशायोगः अन्त्ये स्वत एव नङ्क्षति किं तत्वज्ञानेनेत्यत आह ।

*अविशेषश्चोभयोः ॥६॥

बन्धस्य स्वाभाविकागन्तुकत्वयोर्मोक्षस्योपादेयत्वे अविशेषः यथा बन्धस्योपपत्तिर्यथा च मोक्षस्य तथा वयं वक्तुं शक्नुम इत्यर्थः अथ बन्धमोक्षयोरुपपत्यर्थं आदौ तावत् स्वाभाविकत्वे बन्धस्य दूषणान्याह ।

*नस्वभावतोबद्धस्यमोक्षसाधनोपदेशविधिः ॥७

दुःखात्यन्तनिवृत्तेर्मोक्षत्वस्योक्तत्वात् बन्धोः दुःखयोगः स च पुरुषे न स्वाभाविकः तथासति मोक्षाय साधनोपदेशस्य श्रौतस्य स्मार्त्तस्य च विधिरनुष्ठानं नघटत इति शेषःनह्यग्नेः स्वाभाविकादौष्ण्यान्मोक्षः सम्भवति स्वाभाविकस्य यावद्द्रव्यभावित्वादिति भावः उक्तञ्चेश्वरगीतायाम्

यद्यात्माऽमलिनोऽस्वच्छो विकारी स्यात् स्वभावतः ।

न हि तस्य भवेन्मुक्तिर्जन्मान्तरशतैरपि ॥

भवत्वननुष्ठानं किमेतावतेत्यत आह ।

*स्वभावस्यानपायित्वादननुष्ठानलक्षणमप्रामाण्यम् ॥८॥

अननुष्ठानलक्षणमप्रामाण्यं दोषायैवेति भावः ननु श्रुतिबलादेवानुष्ठानं किन्न स्यात्तत्राह ।

*नाशक्योपदेशविधिरुपदिष्टेप्यनुपदेशः ॥९॥

अशक्याय फलाय उपदेशस्यानुष्ठानं न सम्भवति यत उपदिष्टेऽपि विहितेऽप्यशक्योपाये सः अनुपदेश एव उपदेशाभाव एव बाधितमर्थं वेदोऽपि न बोधयतीति न्यायात् तस्मान्न स्वभावतो बद्धः अत्र शङ्कते ।

*शुक्लपटवद्बीजवच्चेत ॥१०॥

स्वाभाविकस्याप्यपायो दृश्यते यथा शुक्लपटस्य स्वाभाविकं शौक्ल्यं रागद्रव्येणापनोयते यथा वा वीजस्य स्वाभाविक्यप्यंकुरशक्तिरग्निनेति चेत् समाधत्ते ।

*शक्त्युद्भवानुद्भवाभ्यां नाशक्योपदेशः ॥११॥

उक्तदृष्टान्तयोरपि अशक्याय स्वाभाविकायापायोपदेशो लोकानां न भवति कुतः शक्त्युद्भवानुद्भवाभ्यां दृष्टान्तद्वये शुक्लत्वादेराविर्भावतिरोभावावेव न तु शौक्ल्यस्याङ्कुरशक्तेर्वापायः रजकादिव्यापारैर्योगिसङ्कल्पादिना च रक्तपटभ्रष्टवीजयोः पुनः शौक्ल्यस्याङ्कुरशक्तेश्चाविर्भावादिति भावः न चैवं पुरुषे

अपि दुःखशक्तितिरोभाव एव मोक्षोऽस्त्विति सुवचं दुःखात्यन्तनिवृत्तेरेव मोक्षरूपपुरुषार्थत्वोक्तेः एवं बन्धस्य स्वाभाविकत्वं निराकृत्य नैमित्तिकत्वमपि निराकरिष्यन् निमित्तानि कालादीनि निराकरोति ।

*नकालयोगतो व्यापिनो नित्यस्य सर्वसम्बन्धात् ॥१२॥

न कालसम्बन्धनिमित्तकः पुरुषस्य बन्धः व्यापिनो नित्यस्य कालस्य सर्वैः पुरुषैः सर्वकालावच्छेदेन सम्बन्धात् मुक्तामुक्तव्यवस्थानुपपत्तेः ननु कालस्य निमित्तत्वेपि सहकार्य्यन्तरसमवधानाऽसमवधानाभ्यां व्यवस्था स्यादितिचेत् एवं मन्यते यत्संयोगे सत्यवश्यं बन्धस्तत्रैव सहकारिणि लाघवाद्बन्धोयुक्तः पुरुषे बन्धव्यवहारस्यौपाधिकत्वेनाप्युपपत्तेरिति कथं कालनिमित्तकत्वमिति ।

*नदेशयोगतोप्यस्मात् ॥१३॥

अस्मात्पूर्वसूत्रोक्तात्कालस्येव देशस्यापि सर्वपुरुषसर्वकालसाधारण्यमिति भावः ।

+नावस्थातो देहधर्मत्वात्तस्याः ॥ १४ ॥

अवस्थासंघातविशेषरूपता ततो न बन्धः तस्याः देहधर्मत्वात् अचेतनधर्मत्वात् अन्यधर्मस्यान्यबन्धकत्वेमुक्तस्यापिबन्धापत्तेः ननु पुरुषस्यैवावस्थास्तु तत्राह ।

*असंगोयं पुरुष इति ॥ १५ ॥

इति हेतौ पुरुषस्यासङ्गत्वादित्यर्थः।

+नकर्मणान्यधर्मत्वादतिप्रसक्तेश्च ॥ १६ ॥

न विहितनिषिद्धकर्मणाऽपि पुरुषस्य बन्धः कर्मणोन्यधर्मत्वात् चित्तधर्मत्वात् अन्यधर्मेणान्यस्य कार्य्यस्वीकारे मुक्तस्य बन्धापत्तिरुपपत्तिप्रसङ्गात् ननु दुःखयोगरूपबन्धस्य कर्मसामान्याधिकरण्यानुरोधाच्चित्तस्थत्वमेवास्तु किमिति पुरुषेऽपि बन्धः कल्प्यत इत्याशङ्कयाह।

*विचित्रभोगानुपपत्तिरन्यधर्मत्वे ॥ १७ ॥

दुःखयोगरूपबन्धस्यपुरुषे ऽभावे कश्चिदेव दुःखभोक्ता कश्चिन्नेति विचित्रभोगानुपपत्तिरतः पुरुषेऽपि दुःखयोगः स्वीकार्य्यः स च दुःखप्रतिविम्बरूप एव प्रतिविम्बश्च स्वोपाधेरेव भवतीति नातिप्रसङ्गः चित्तस्यैव बन्ध इति तु चित्तस्य दुःखरूपं बन्धमादाय बोद्धयं साक्षात् प्रकृतिर्निमित्तकत्वं बन्धस्यापाकरोति।

*प्रकृतिनिबन्धनाच्चेन्नतस्याअपिपारतन्त्र्यं १८

प्रकृतिनिमित्ताद्बन्धो भवत्विति चेन्न यतस्तस्या अपि प्रकृतेरपि उत्तरसूत्रे वक्ष्यमाणसंयोगपारतन्त्र्यं तेन विनापि बन्धकत्वे प्रलयादौ बन्धप्रसङ्गात् निबन्धनाचेदिति पाठे प्रकृतिनिबन्धनाबद्धताचेदिति योज्यं अथ यत्परतन्त्राप्रकृतिबन्धकारणं तस्मादेव संयोगविशेषादौपाधिको बन्धोऽग्निसंयोगाज्जलौष्ण्यवदिति सिद्धान्तं प्रसङ्गेनान्तरालएवावधारयति।

*ननित्यशुद्धबुद्धमुक्तस्वभावस्यतद्योगस्तद्योगादृते १९

तद्योगादृते प्रकृतिसंयोगं विना तद्योगः बन्धसम्पर्को न पुरुषस्येति शेषः बन्धस्यौपाधिकत्वस्वाभाय वक्तीत्युक्तिः यदि बन्धः प्रकृतिसंयोगजन्यः स्यात्तर्हि पाकजरूपमग्निसंयोगवियोग इव प्रकृतिवियोगेप्यनुवर्त्तेत अतश्च प्रकृतिवियोगे बन्धाभावादौपाधिक एव बन्धो न तु स्वाभाविको नैमित्तिको वेति सिद्धान्तरहस्यं एवञ्च संयोगनिवृत्तिरेव साक्षाद्बन्धहानोपाय इत्यप्युक्तं भवति स्मृतिश्च यथाजलदग्ध्वाश्लिष्टं रज्जं विच्छिद्य रच्यते तथा सदोषप्रकृतिविच्छिन्नोयं न शोचति इति वैशेषिकाणामिव पारमार्थिको दुःखयोगो माभूदिति वक्तुं पुरुषविशेषणं नित्येत्यादि यथा स्वभावशुद्धस्य स्फटिकस्य रागयोगो न तथा योगं विना घटते तथैव नित्यशुद्धादिस्वभावस्य पुरुषस्योपाधिसयोगं विनादुःखसम्बन्धो न घटते स्वतो दुःखाद्यसम्भवात् अतएवोक्तं सौरे यथा हि केवलो रक्तः स्फटिको लक्ष्यते जनैः रञ्जकाद्युपाधामेन तद्वत्परमपूरुष इति तत्र नित्यशुद्धत्वं सदा पापपुण्यशून्यत्वं नित्यबुद्धत्वं अलुप्तचिद्रूपत्वं नित्यमुक्तत्वं सदापारमार्थिकदुःखायुक्तत्वम् प्रतिविम्बरूपदुःखयोगस्तु अपारमार्थिको वन्ध इतिभावः आत्मनउक्तरूपत्वंश्रुतिस्मृत्यादिप्रसिद्धमेव अयमेवार्थः पतञ्जलिनाप्युक्तः द्रष्टृदृश्ययोः संयोगो हेयहेतुरिति नन्वेवं कालादिवत्प्रकृतिसंयोगस्यापि मुक्तामुक्तपुरुषसाधारणतया कथं बन्धहेतुत्वमिति चेन्न जन्मापरनाम्नः स्वस्वबुद्धिभावापन्नप्रकृतिसंयोगविशेषस्यैवात्र संयोगशब्दार्थत्वात् योगभाष्ये व्यासदेवेनैव व्याख्यातत्वात् बुद्धिवृत्त्युपाधिनैव पुरुषेदुःखयोगाच्च वैशेषिकादीनामिव भोगजनकता-

वच्छेदकत्वेनान्तःकरणसंयोगे वैजात्यं चास्माकमपोष्टं तेन न सुषुप्त्यादौ बन्धप्रसङ्गः स्वत्वञ्च स्वभुक्तिवृत्तिवासनावत्त्वं वृत्तितत्संस्कारप्रवाहोप्यनादिस्तेन स्वस्वाम्यभावव्यवस्थेति दिक् कश्चित्तु प्रकृतिपुरुषयोः संयोगाङ्गीकारे पुरुषस्य परिणामसङ्गौ प्रसज्येयातां अतोऽत्राविवेक एव योगशब्दार्थो न तु संयोग इत्याह तन्न तद्योगोप्यविवेकादिति सूत्रेणाविवेकस्य योगहेतुताया एव सूत्रकारेण वक्ष्यमाणत्वात् किञ्च विवेकाभावरूपस्याविवेकस्य संयोगत्वे प्रलयादावपि प्रकृतिपुरुषसंयोगसत्त्वेन भोगाद्यापत्तिः मिथ्याज्ञानरूपस्याविवेकस्य संयोगत्वे च आत्माश्रयः पुंप्रकृतिसंयोगस्य ज्ञानादिहेतुत्वादिति तस्मादविवेकातिरिक्तो योगो वक्तव्यः स च संयोग एवान्यस्याप्रामाणिकत्वात् संयोगश्च न परिणामः सामान्यगुणातिरिक्तधर्मोत्पत्त्यैव परिणामित्वव्यवहारात् अन्यथा कूटस्थस्य सर्वगतत्वरूपविभुत्वानुपपत्तेः नापि संयोगमात्रं सङ्गः परिणामहेतुसंयोगस्यैव सङ्गशब्दार्थत्वात् पद्मपत्रस्थजलेन पत्रासङ्गतायाः पुरुषासङ्गतायां दृष्टान्तत्वेन सङ्गशब्दस्यैवमर्थत्वनिर्णयात् तस्मात् संयोगविशेष एवात्र बन्धाख्यहेयहेतुतया सूत्रकृदभिप्रेत इति गम्यते इत्यलं इदानीमन्याभिप्रेतान्बन्धहेतून्निरस्यति।

+नाविद्यातोप्यवस्तुना बन्धायोगात् ॥ २०॥

अद्वैतवादिनामविद्याया अप्यवस्तुत्वेन तया बन्धानुपपत्तिः नहि स्वाप्नरज्ज्वाबन्धनं दृष्टं अविद्याया वस्तुत्वे त्वाह।

*असत्त्वे सिद्धान्तहानिः ॥ २१ ॥

स्पष्टम्

*विजातीयद्वैतापत्तिश्च ॥ २२ ॥

तर्हि सजातीयविजातीयद्वैताभाव इष्यते शङ्कते ।

*विरुद्धोभयरूपाचेत् ॥ २३ ॥

अविद्या न सती येन विजातीयद्वैतापत्तिः नाप्यसती कार्योपलम्भात् किन्तु सदसद्रूपेति चेत् ।

* न तादृक्पदार्थाप्रतीतेः ॥ २४ ॥

विवादास्पदे हि वस्तुनि दृष्टान्त आवश्यक इति भावः । किञ्च अविद्यायाःसाक्षादेव दुःखयोगाख्यबन्धहेतुत्वे ज्ञानिनाविद्याक्षयानन्तरं प्रारब्धभोगानुपपत्तिः बन्धस्य कारणनाशात् सिद्धान्ते तु प्रकृतेः संयोगद्वारैव बन्धहेतुत्वात् जन्माख्यस्य च संयोगस्य प्रारब्धसमाप्तिं विना न नाश इति न दोषः पुनः न शङ्कते ।

*न वयं षट्पदार्थवादिनोवैशेषिकादिवत् २५

न वयं नियतपदार्थवादिनः अतो प्रतीतोऽपि सदसदात्मकः सदसद्विलक्षणो वा विद्यापदार्थ इत्यङ्गीकुर्म्मः मानसिद्धत्वात् आदिप्रदाने यायिकः स हि षोडशपदार्थवादो परिहरति ।

*अनियतत्वेपि नायौक्तिकस्य संग्रहोन्यथा बालोन्मत्तादिसमत्वम् ॥ २६ ॥

पदार्थनियमो मास्तु तथापि भावाभावविरोधेन युक्तिविरुद्धस्य सदसदात्मकपदार्थस्य संग्रहो भवद्वचनमात्राच्छिष्याणां न सम्भवति अन्यथा बालोन्मत्ताद्युक्तस्याप्ययौक्तिकस्य संग्रहः स्यादित्यर्थः श्रुत्यादिकं मानञ्चात्र नास्ति तस्यान्यथासिद्धेरिति भावः केचिन्नास्तिका आहुः सन्ति बाह्याः विषयाः क्षणिकास्तेषां वासनया जीवस्य बन्ध इति तद्दूषयति ।

*नानादिविषयोपरागनिमित्तोऽप्यस्य ॥२७॥

अस्य पुरुषस्य प्रवाहरूपेणानादिकाऽथ्योपाया विषयवासना तन्निमित्तकोऽपि बन्धो न सम्भवति निमित्ततोऽप्यस्येति पाठस्तु सुगमः कुतः इत्याह । न बाह्याभ्यन्तरयोरुपरञ्ज्योपरञ्जकभावोऽपि देशव्यवधानात् ।

*नबाह्याभ्यन्तरयोरुपरञ्ज्योपरञ्जकभावोऽपिदेशव्यवधानात्स्रुघ्नस्थपाटलिपुत्रस्थयोरिव२८

तन्मते हि परिच्छिन्नो देहान्तरस्थ एवात्मा तस्याभ्यन्तरस्य न बाह्यविषयेण सहोपरञ्ज्योपरञ्जकभावोपि कुतः स्रुघ्नस्थपाटलिपुत्रस्थयोरिव देशव्यवधानात् संयोगे सत्येव हि वासनाख्य उपरागो दृष्टः यथा मञ्जिष्ठावस्त्रयोः यथा वा पुष्पस्फटिकयोः अपिना स्वमते सङ्गाभावः समुच्चीयते नन्विन्द्रियाणामिवात्मनो विषयदेशे गमनाद्विषयसंयोगेन विषयोपरागः स्यात्तत्राह ।

*द्वयोरेकदेशलब्धोपरागान्न व्यवस्था ॥ २९

एकस्मिन् विषयदेशे संयोगेन लब्धादुपरागाद्बन्धो न सम्भवतीति शेषः कुतः यस्मात् द्वयोरबद्धमुक्तात्मनोः न व्यवस्थात्मनो गमनसंयोगाङ्गीकारे मुक्तस्याऽपि बन्धापत्तिरित्यर्थः अत्र शङ्कते।

**अदृष्टवशाच्चेत् ३०**

विषयसंयोगसाम्येऽप्यदृष्टवशादेवोपरागलाभ इति चेत्।

**नद्वयोरेककालायोगादुपकार्योपकारकभावः ३१**

तव मते कर्तृभोक्तृभेदात् एकाकालासम्बन्धाच्च नैवोपकार्योपकारकभावः न कर्तृनिष्टादृष्टाद्भोक्तृनिष्ठविषयोपरागः सम्भवतीत्यर्थः ननु पितृनिष्ठेन गर्भाधानादिपुत्रकर्म्मणा पुत्रस्योपकारो यथा भवति तद्वद्व्यधिकरणेनैवादृष्टेन भोक्तृविषयोपरागः स्यादिति शङ्कते।

**पुत्रकर्मवदिति चेत् ३२**

पुत्रकर्म्मवत्पुत्रसंस्कारकर्म्मवत् दृष्टान्तासिद्ध्यापरिहरति।

**नास्ति हि तत्र स्थिर एक आत्मा यो गर्भाधानादिना संस्क्रियते ३३**

त्वन्मते गर्भाधानादिकर्म्मणापि पुत्रस्योपकारो न घटते हि यस्माद्गर्भाधानमारभ्य स्थिर एक आत्माधानादिसंस्कारकर्म्मभिः संस्कार्यो नास्ति आस्तिकमते तु स्थैर्याभ्युपगमाद्वचनाच्च तत्र पुत्रनिष्ठा दृष्टस्यैवोत्पत्तेः पुत्रोपकारसम्भव इति भावः ननु क्षणिको बन्धोऽनियतकारणकोऽभावकारणकोऽका

रणक एव वा स्वित्याशयेन पुनः प्रत्यवतिष्ठते ।

**स्थिरकार्यासिद्धेः क्षणिकत्वम् ३४**

बन्धस्येति शेषः तथाचाकारण क एवास्त्वित्याशयः बन्धादिकं क्षणिकं सत्वाद्दीपशिखावदिति प्रयोगः न च घटादौ व्यभिचारः पक्षसमत्वात् एतदेवोक्तं स्थिरकार्यासिद्धेरित्यनेन दूषयति ।

**न प्रत्यभिज्ञाबाधात् ३५**

न कस्यापि क्षणिकत्वं यदद्राक्षं तदेव स्पृशामीत्यादिप्रत्यभिज्ञानुगृहीतेन बन्धादिकं स्थिरं सत्वात् घटादिवदिति प्रत्यनुमानेन क्षणिकत्वस्य बाधात् ।

**श्रुतिन्यायविरोधाच्च ३६**

सदेवसौम्येदमग्र आसीत् तम एवेदमग्र आसकथमसतः सज्जायेतेत्यादि श्रुतियुक्तिभिः प्रपञ्चस्य भावकारणकत्वायोगेन क्षणिकत्वस्यापि श्रुतियुक्तिविरुद्धत्वात् ।

**दृष्टान्तासिद्धेश्च ३७**

दृष्टान्ते दीपशिखादौ क्षणिकत्वस्यासिद्धेः सूक्ष्मानेकक्षणानाकलनेन क्षणिकत्वभ्रम एव तत्र भवति भावः किञ्च क्षणिकत्ववादे मृत्घटादिस्थले कार्य्यकारणभावो नोपपद्येत न च नास्त्येव स इति वाच्यम् कार्यार्थिनः प्रवृत्त्यन्यथानुपपत्या तत्सिद्धेरित्यभिप्रेत्याह ।

**युगपज्जायमानयोर्न कार्य्यकारणभावः ३८**

किं मृद्घटयोर्युगपज्ज्ञायमानयोः कार्यकारणभावः किं वाक्रमिकयोः नाद्यः विनिगमकाभावात् घटार्थिनोमृदिप्रवृत्यनुपपत्तेश्चनांत्यइत्याह।

**पूर्वापायेउत्तरायोगात् ॥३९॥**

पूर्वस्यकारणस्यापायकाले उत्तरस्य कार्यस्यायोगात् उपादानकारणानुगततयैव हि कार्यानुभवः सचक्षणिकत्ववादेन संभवति।

**तद्भावे तदयोगादुभयव्यभिचारादपि न ॥४०॥**

पूर्वस्यभावकाले उत्तरस्यासंबंधात् उभयव्यभिचारादपि न कार्यकारणभावइति शेषः यदाउपादेयं तदोपादानं यदोपादानाभावस्तदोपादेयाभावइत्यन्वयव्यतिरेकौ हि उपादेयोपादानयोः कार्यकारणभावग्राहकौ तौ चक्षणिकत्वेन क्रमिकयोस्तयोर्विरुद्धकालत्वान्न संभवतः ननु निमित्तकारणस्येवोपादानस्यापि पूर्वभावमात्रेणैव कारणतास्तु तत्राह।

**पूर्वभावमात्रे न नियमः ॥४१॥**

न नियम इति इदमेवोपादानमिति न नियमः स्यात् निमित्तकारणनामपि पूर्वभावाविशेषात् इदमेव हि निमित्तोपादानयोर्विभागो लोकसिद्धः अथ विज्ञानातिरिक्तवस्त्वभावेन बंधोपि मिथ्येति न तत्र कारणान्वेषणमिति विज्ञानवादिनां मतंनिराकरोति।

न विज्ञानमात्रं वाह्यप्रतीतेः ॥४२॥

स्वाप्नप्रतीति दृष्टान्तेन विषयाभावेप्युपपत्तिस्तत्राह ।

तदभावे तदभावाच्छून्यं तर्हि ॥४३॥

तर्हि वाह्याभावेशून्यं प्रसज्येत कुतः वाह्याभावेविज्ञानाभावात् प्रतीतिर्हि विषयसाधिका वाह्यप्रतीतिर्यन्न विषयं साधयेद्विज्ञानप्रतीति रपि न विज्ञानं साधयेदितिभावः अस्तुतर्हि शून्यमेवतत्वमतश्च बंधकारणान्वेषणं न युक्तं तुच्छत्वादिति नास्तिकशिरोमणिः प्रत्यवतिष्ठते ।

शून्यं तत्वं भावोपि नश्यति वस्तुधर्मत्वाद्विनाशस्य ॥४४॥

शून्यमेवतत्वं यतः सर्वोपिभावो विनश्यति पश्चविनाशीसमिथ्यास्वप्नवत् अतः सर्ववस्तुनामाद्यं तयोरभावमात्रत्वात्मध्येक्षणिकं सत्वं सांवृत्तिकं न पारमार्थिकं ततः किं केनबध्येतभावानां विनाशित्वे हेतुः वस्तुधर्मत्वाद्विनाशस्येति विनाशस्य वस्तुस्वभावत्वादित्यर्थः परिहरति ।

अपवादमात्रमबुद्धानां ॥४५॥

भावत्वाद्विनाशित्वमिति मूढानामपवादमात्रं मिथ्यावादराव नाशकारणाभावेन निरवयवद्रव्याणां नाशासंभवात् किं बहुनाकार्याणामपि न विनाशसिद्धिः घटोजीर्णइति प्रत्ययेनेव घटोतीति इत्यादि प्रत्ययेनापि घटादेरतीताख्याया अवस्थाया एव सिद्धेः किं च ।

* उभयपक्षसमानक्षेमत्वादयमपि ॥४६॥

क्षणिक बाह्यपक्षेण विज्ञानमात्रपक्षेण च सहसमानक्षेमत्वादतुल्यनिरसनहेतु कत्वादयमपि पक्षो न सम्यक्क्षणिकपक्षनिरासहेतुः प्रत्यभिज्ञादिर्विज्ञानपक्षनिरासहेतुर्बाह्यप्रतीत्यादिश्चात्रापि समानइतिभावः यस्त्वतः शून्यप्यस्यैव पुरुषार्थत्वमभ्युपेयते तदपि दुर्घटमित्याह ।

* अपुरुषार्थत्वमुभयथा ॥४७॥

दुःखनिवृत्तिरूपतया दुःखनिवृत्तिसाधनतायावा शून्यस्य पुरुषार्थत्वं स्यात् तच्च न घटते स्वनिष्ठत्वेनैव सुखादीनां लोके पुरुषार्थत्वावगमात् स्थिरस्य पुरुषस्य चानङ्गीकारादित्यर्थः अन्यान्यपि संभाव्यनिबंधकारणानि निरस्यति ।

* नगतिविशेषात् ॥४८॥

शरीरप्रवेशादिरूपात् पुरुषस्य बंधोनेत्यर्थः हेतुमाह ।

* निष्क्रियस्य तदसंभवात् ॥४९॥

स्पष्टं ननु श्रुतिस्मृत्योर्गमनागमनश्रवणात् सक्रियत्वमेवास्तु तथा च परिच्छिन्नत्वमपीत्यत आह ।

* मूर्त्तत्वाद्घटादिवत्समानधर्मापत्तावपसिद्धान्तः ॥५०॥

घटादिवन्मूर्त्तत्वात् परिच्छिन्नत्वात् तत्समानधर्माणां सावयवत्वविनाशित्वादीनामापत्तौ आस्तिकानामपसिद्धान्तः स्यादित्यर्थः आत्मनोऽपरिच्छिन्नत्वेगति श्रुतिमुपपादयति ।

•गतिश्रुतिरप्युपाधियोगादाकाशवतम् ॥५१॥

नित्यः सर्वगतः स्थाणुरित्यादिप्रमाणे नात्मनो परिछिन्न-त्वेगति श्रुतिरौपाधिकगतिपराव्याख्येयाघटसंवृतमाकाशं नीयमाने यथा घटे घटोनि नीयेतेनाकाशं तद्वज्जीवो न भो-यमः इति श्रुतिः प्रकृतिः कुरुते कर्मशुभाशुभफलात्मकं प्रकृ-तिश्च तदश्नातित्रिषु लोकेषु कामगाइत्यादिस्मृत्यात्यागतेः प्रकृतिनिष्टत्वावगमाच्च पूर्वं विहितनिषिद्धव्यापाररूपकर्मणां बंधोनिराकृतः इदानीमदृष्टरूपकर्मणापि तन्निरस्यति ।

• न कर्मणागत्येतद्धर्मत्वात् ॥५२॥

• अतिप्रसक्तिरन्यधर्मत्वे ॥५३॥

•सूत्रेस्यष्टेनिर्गुणादि श्रुतिविरोधश्चेति॥५४॥

स्वभावादिभिः कर्मांतरेणान्येन वा केन चित्पुरुषस्य बं-धोत्पत्तौ साक्षीचेताकेवलो निर्गुणश्चेत्यादि श्रुतिविरोधः इति शब्दो बंधहेतु परीक्षासमाप्तौ ननु प्रकृति पुरुषसंयोगोपि स्वाभाविकत्वे कालादिनिमित्तकत्वे वा मुक्तस्यापि बंधापाद-कइत्यतो विशेषमाह ।

• तद्योगोप्यविवेकान्न समानत्वं ॥५५॥

प्रकृतिसंयोगोपि अविवेकात् अतो न समानत्वं दोषस्य मुक्तस्याविवेकाभावान्न पुन; संयोगोभवतीत्यर्थः; अविवेकश्च विषयता संबंधे न पुरुषधर्मइति न वैयधिकरण्यं अगृहीता संसर्गकज्ञानद्वयरूपश्चासौ तद्वासनारूपो वा तस्य च संयोगा-ख्यजन्महेतुत्वं त्रिधासाक्षात् धर्माधर्मो त्पतिद्वारारागादिद्व-

ष्टद्वाराचैत्यादिबोध्यं एवं हेयहेतुं प्रतिपाद्यहानोपायं प्रतिपादति।

• नियतकारणात्तदुच्छित्तिर्ध्वान्तवत् ॥५६॥

शुक्तिरजतादिस्थलेलोकसिद्धं यन्नियतं कारणं विवेकख्यातिरविप्लवाद्धानोपायइति ननु प्रकृतिपुरुषाविवेक एव चेत्प्रकृतिसंयोगद्वाराबंधहेतुः तयोर्विवेकएव चेन्मोक्षहेतुस्तर्हि देहाद्यभिमानसत्वेपि मोक्षः स्यात् स च श्रुत्यादिविरुद्धस्तत्राह।

•प्रधानाविवेकादन्याविवेकस्यतद्धानेहानं ५७

पुरुषेप्रधानाविवेकात् कारणाद्योन्याविवेको बुद्धिदेहाद्यविवेकोजायते कार्याविवेकस्य कार्यतया अनादिकारणाविवेकम् लकत्वात् तस्य प्रधानाविवेकहाने सत्यवश्यमित्यर्थः ननु बुद्ध्याद्यभिमानातिरिक्ते प्रधानाभिमाने किं मानअहमज्ञइत्याद्यभिमानानां बुद्ध्यादिविषयत्वेनैवोपपत्तेरिति चेन्न मृत्वामृत्वापुनः सृष्टौस्वर्गीस्यां माचनारकीत्याद्यभिमानानां प्रधानविषयत्वं विनानुपपत्तेः अतीतानां बुद्ध्याद्यखिलकार्याणां पुनः सृष्ट्यभावात् प्रधानस्यत्विदमेव प्रलयोत्तरं जन्मयद्बुध्यादिरूपैक परिणामत्यागी ऽपरबुध्यादिरूपतया परिणामनमिति किं च बुध्यादिषु पुरुषाणामभिमानो नादिवक्तुं न शक्यते बुद्ध्यादीनां कार्यत्वात् अतः कार्येष्वभिमानव्यवस्थार्थं नियामकांक्षायां कारणाभिमानएव सिद्ध्यति लोके तथैव दृष्टत्वात् दृष्टो हि क्षेत्रेभिमानात्क्षेत्रजन्यधान्यादिष्वभिमानः सुवर्णाभिमानाच्च तज्जन्यकटकादिष्वभिमा-

नइति प्रधानाभिमानवासनयोश्च वीजांकुरवदनादित्वान्न तदभिमानेनियामकान्तरापेक्षेति नन्वेवमपि पुरुषस्य चेद्व धर्मोचौविवेकाविवेकौ च स्वीकृतौ तर्हि नित्यशुद्धबुद्धमुक्त-स्येति स्वोक्तविरोधो अतआह।

**• वाङ्मात्रं न तुतत्वं चित्तस्थितेः ॥५८॥**

बन्धादीनां सर्वेषां चित्तएवावस्थानात् पुरुषेबंधादिवाङ्मात्रं स्फटिकलौहित्यवत न तुतत्वं अनारोपितं जपालौहित्यवदित्यर्थः उक्तं च बन्धमोक्षौसुखं दुःखं मोहापत्तिश्च मायया स्वप्ने यथात्मनः ख्यातिः संसृतिर्नतुवास्तवोति मायेति मायाख्यप्रकृत्यौपाधिकीत्यर्थः नन्वेवं तुच्छस्य बन्धस्यहान कथं पुरुषार्थः कथं वान्यधर्माभ्यां विवेकाविवेकाभ्यामन्यस्य बन्धमोक्षस्वीकारेकर्मादिभिरिवनाव्यवस्थेति चेत् अत्राभियुक्ताः समादधुः यद्यपि दुःखयोगरूपो बन्धोवृत्तिरूपौ च विवेकाविवेकौ चित्तस्यैव तथापि पुरुषे दुःखप्रतिविंबएवभोगइत्यवस्तुत्वेपि तद्धानंतं पुरुषार्थः दुःखं माभुंजीयेति प्रार्थनात् एवं च यस्मैपुरुषायप्रकृतिरविवेकेनात्मानं दर्शितवतीतद्वासनावशात् तमेवसंयोगद्वारा वध्नातिनान्यं यस्मैविवेकेनात्मनं दर्शितवतीतमेवस्ववियोगद्वाराविमो च यतिवासनोच्छेदादिति व्यवस्थापि घटतइति कर्मादिभिर्बंधाभ्युपगमेत्वेवं व्यवस्थानघटते कर्मादीनां साक्षात्पुरुषेष्वप्रतिविंवनादिति ननु बंधस्यवाङ्मात्रत्वे श्रवणे न युक्त्यावासनिवर्तेत किं विवेकसाक्षात्कारेणातआह।

**युक्तितोपि नबाध्यतेदिङ्मूढवदपरोक्षादृते॥५९॥**

दिङ्मूढस्य वाक्याचमपि दिग्वैपरीत्यं साक्षात्कारं विनानबाध्यते तथाप्रकृतेपि युक्तिर्मननं अपिनाश्रवणसमुच्चय; बन्धवाधोवंधनिवृत्तिः प्रकृतिपुरुषविद्धौ हि तद्विवेकान्मोक्ष; स्यादतस्तत्सिद्धौ प्रमाणमुपन्यति।

* अचाक्षुषाणामनुमाने न बोधोधूमादिभिरिवबह्नेः ॥६०॥

अचाक्षुषाणां अप्रत्यक्षाणां अनुमानेनेत्यागमोपलक्षणं तथा चेश्वरकृष्णश्चाह सामान्यतस्तु दृष्टादतीन्द्रियाणां प्रतीतिरनुमानात् तस्मादपिचासिद्धं परोक्षमात्प्रागप्रामात्सिद्धमिति विवेकप्रतियोग्यनुयोगिपदार्थान् वक्ष्यमाणानुमानोपयगिकार्यकारणाभावं च दर्शयति।

*सत्वरजस्तमसांसाम्यावस्थाप्रकृतिः प्रकृतेर्महान्महतोहं करोहं कारात्यं च तन्मात्राण्युभयमिन्द्रियं तन्मात्रेभ्यः स्थूलभूतानि पुरुषइति पंचविंशतिर्गुणाः ॥६१॥

लघुत्वादिगुणयोगात्सत्वादित्रयं द्रव्यं तत्र गुणशब्दस्तु पुरुषोपकरणत्वात् तदेव प्रकृतिर्नतुतदाधारवस्त्वन्तरं सत्वादीनामतत्वर्मत्वं तद्रूपत्वादिति वक्ष्यमाणत्वात् साम्यावस्थान्यूनाधिकभावेनासं हननं अकार्यावस्थत्वमित्यर्थः एवं च कार्यभिन्नं गुणत्रयं प्रकृतिरिति पर्यवसितोर्थः इदं च मूलप्रकृतिलक्षणं तत्वान्तरोपादानत्वं प्रकृतित्वमिति तु सामान्य-

लक्षणं उभयं वाह्याभ्यन्तरभेदेनैकादशविधं स्थूलभूतानीत्युक्तास्तन्मात्राणां सूक्ष्मभूतत्वमभिप्रैतिपुरुषस्तु कार्यकारणविलक्षणः एवं पञ्चविंशतिगुणः पदार्थसमूहः अनुमानक्रममाहसूत्रैः।

**स्थूलात्पं च तन्मात्रस्य ॥६२॥**

अनुमानेन बोधइत्यनुवर्त्तते स्थूलं पृथिव्यादिप्रत्यक्षसिद्धं तेन तन्मात्राणामनुमानं अपकर्षकाष्ठापन्नानि स्थूलभूतानिस्वविशेषगुणवद्द्रव्योपादानकानि स्थूलत्वात् पटवदितिप्रयोगः।

**वाह्याभ्यन्तराभ्यान्तैश्चाहंकारस्य ॥६३॥**

वाह्याभ्यन्तराभ्यामिन्द्रियाभ्यान्तैस्तन्मात्रेन्द्रियाणि अभिमानवद्द्रव्योपादानकानि अभिमानकार्यत्वात् यन्नैवं तन्नैवं यथा पुरुषइत्यनुमानप्रकारणः अत्र साधारणद्रव्याणां हिरण्यगर्भाहंकारापादानकत्वमेव त्ववधेयं।

**तेनान्तःकरणस्य ॥६४॥**

तेनाहंकारिणकार्येणतत्कारणतयामुख्यस्यान्तःकरणस्य महदाख्यस्यानुमानेनबोधः अत्रप्रयोगः अहंकारद्रव्यं निश्चयवृत्तिमद्द्रव्योपादानकं निश्चयकार्यद्रव्यत्वात् यन्नैवं तन्नैवं यथा पुरुषादिरिति अत्रायं तर्कोबोध्यः सर्वोपिलोकः पदार्थमादौस्वरूपतोनिश्चित्यपश्चादभिमन्यते अयमहं मयेदं कर्तव्यमित्यादिरूपेणेति तावत्सिद्धं तत्र अहंकारद्रव्यकारणाकांक्षायां वृत्त्योः कार्यकारणभावेन तदाश्रययोरेवकार्यकारणभावोलाघवात्कल्प्यते कारणस्य वृत्तिलाभेन कार्यवृत्तिलाभस्यौत्सर्गिकत्वादिति।

• ततः प्रकृतेः ॥६५॥

ततोमहत्तत्वात्कार्यात् प्रकृतेरनुमानेनबोधः सुखदुःख-मोहधर्मिणी बुद्धिः सुखदुःखमोहधर्मकद्रव्यजन्याकार्यत्वेसति सुखदुःखमोहात्मकत्वादिति कारणगुणानुसारेणैवकार्यगुणौ-चित्यं चात्रानुकूलस्तर्कः ननु विषयेषु सुखादिमत्वेप्रमाणं नास्ति अहं सुखीदुःखीमूढइत्येवानुभवात् तत्कथं कान्ता-दिविषयौ दृष्टान्तः इति चेत् अत्राहुः सुखाद्यात्मकबुद्धिका-र्यतयास्रक् सुखं चंदनसुखं इत्याद्यनुभवेन च विषयाणाम-पि सुखादिधर्मकत्वसिद्धेः किं च यस्यान्वयव्यतिरेकौ सु-खादिनासहदृष्टश्चेते तस्यैव सुखाद्युपादानत्वंकल्प्यते तस्यनि-मित्तत्वं परिकल्प्यान्यस्योपादानत्वकल्पने कारणद्वयकल्पना गौरवात् अपि च अन्योन्यसंवादेन प्रत्यभिज्ञया च विषयेषु सर्वपुरुषसाधारणस्थिरसुखसिद्धिः तत्तत्सुखग्रहणायात्मनये वृत्तिनियमादिककल्पनागौरवं च फलमुखत्वान्न दोषावहं विषयेपि सुखादिकं च मार्कण्डेयपुराणे उक्तं तत्सन्तु चेत्त-स्यैथवापि देहेसुखानिदुःखानि च किं ममात्रेति अहं सु-खीत्यादिप्रत्ययास्तु अहंधनीत्यादिप्रत्ययवत्स्वस्वामिभावाख्यं सम्बन्धविषयकाः तेषां प्रत्ययानां समवायसम्बन्धविषयकत्व-भ्रमनिरासार्थं तु सुखिदुःखिमूढभ्यः पुरुषोविविच्यते शा-स्त्रेष्विति यत्तुविषयासम्प्रयोगकाले शान्तिसुखं सात्विकं सुषुप्त्यादौ व्यज्यतेतदेवबुद्धिधर्मंश्चात्मसुखमुच्यते इति यद्यपि वैशेषिकाद्यास्तार्किका अन्यथाप्यनुमिमत्ते तथापि स्मृत्या-द्युपोद्वलितत्वात्सांख्यप्रक्रियैवसाध्वीतिमन्तव्यं एवं च श्री-

तव्यः श्रुतिवाक्येभ्यो मंतव्यश्चोपपत्तिभिरित्यत्रमननं सांख्य-
रीत्यैव नन्वेवमपि अखिलजडेभ्यः पुरुषविवेकएव हेतुस्त-
त्किमर्थं जडानामन्योन्यविवेकोत्र दर्शितइति चेत प्रकृत्या-
दितत्त्वोपासनयासत्वशुद्ध्यर्थं तद्विवेकस्याप्यपेक्षितत्वादिति
अथ यथोक्तकार्यकारणभावशून्यस्य पुरुषस्य प्रकारांतरेणा-
नुमानमाह ।

## संहतपरार्थत्वात्पुरुषस्य ॥६६॥

संघात कारणीभूतसंयोगस्तद्वतोव्यक्तमहदादेः परार्थत्वात्
हेतो पुरुषस्यबोध प्रयोगस्तुविवादास्पदं प्रकृतिमहदादिकं
स्वेतरस्यभोगा पवर्गफलकंसंहतत्वात शय्यासनादिवत अनं-
नचानुमानेनप्रकृते परोऽसंहतरावपुरुषः सिद्धतितस्यापिसं-
हतत्वेनानवस्थापत्ते इदानींसर्वकारणत्वो पपत्तयेप्रकृते नि-
र्नित्यत्वसुपपाद यतिपुरुषकौठस्थसिद्धयर्थं ॥

## मूलेमूला भावाद् मूलंमूलं ॥ ६७ ॥

त्रयोविंशत्तितत्वानां मूलेप्रधानेऽनवस्थापत्याकारणाभा-
वादकारणं प्रधानमित्यर्थः ननु तस्मादव्यक्तमुत्पंनत्रिगुणं
द्विजसत्तमेत्यादिस्मृत्याप्रधानस्यापि पुरुषादुत्पत्तिश्रवणात्
पुरुषः प्रकृतेर्मूलमास्तां पुरुषस्य नितरतया च नानवस्था-
अविद्याद्वारकतया च न कौटस्थ्याहानिरपिस्मर्यते हि तस्मा-
दज्ञानमूलोयं संसारः पुरुषस्य हीत्यतआह ।

## पारंपर्येप्येकत्रपरिनिष्ठेति संज्ञामात्रं ६८

पुरुषस्याविद्याद्वाराजगत्कारणत्वेपि एकत्राविद्यायां परि-

णामिकारणत्वपर्यवसानं पुरुषस्यापरिणामित्वात् अतो यत्र पर्यवसानं सैवप्रकृतिरिति मूलप्रकृतिरिति हि मूलकारणस्य संज्ञामात्रं नन्वेवं गणनानैपपद्यते प्रकृतिकारणभूतजडत-त्वांतरापत्तेरित्यतश्चाह।

**समानः प्रकृतेर्द्वयो ॥६९॥**

प्रकृतिर्मूल कारणविचारे द्वयोर्वादि प्रतिवादिनोः समा-नः पक्षः यथा प्रकृतेरुत्पत्तिः श्रूयते तथा अविद्यायामपिन तत्वाधिक्यमिति अविद्यापंचपर्वैषा प्रादुर्भूतामहात्मनः इत्य-विद्याया अतश्चैकस्या आवश्यंगौण्युत्पतिर्वक्तव्यासाच प्रकृ-तेरेवपुरुष संयोगादिभिरभि व्यक्तिरूपायुक्ता संयोगरनक्ष-णोत्पत्तिः कथ्यतेकर्मज्ञान योरितिकौर्मे प्रकृतिपुरुषयोर्गौण्यु त्पनिस्मरणात् अविद्यार्चमिथ्याज्ञानारूपाः बुद्धिपर्यायइसतो न तत्वाधिक्यमिति नन्वेवं प्रकृतिपुरुषाद्यनुमानप्रकारसत्वे सर्वेषां विवेकमननं कुतो न जायते तत्राह।

**अधिकारित्रैविध्यान्ननियमः ॥७०॥**

मनने हि मंदोमध्यमउत्तमइति त्रिविधाअधिकारिणः तत्र मंदैः वौद्धधूर्त्तैः कुतर्कैंनुमानानिबाध्यं तैमध्यमैर्विरुद्धा-सलिंगैः सप्रतिपक्षितानि क्रियन्ते उत्तमाधिकारिणामेव तूक्तरीत्यामननमितिभावः सर्वेषामेव उक्तरीत्यामननमिति नियमोनेत्यक्षरार्थः महदहंकारयोः स्वरूपकाहसूत्राभ्यां।

**महदाख्यमाद्यं कार्यं तन्मनः ॥७१॥**

मनइति मननवृत्तिकं मननमत्रनिश्चयस्तद्वृत्तिकाबुद्धिः तन्महदाख्यमाद्यं कार्य्यं।

• चरमोहंकारः ॥७२॥

यः अहंकरोतीत्यहंकारोभिमानवृत्तिकः पदार्थः सः चरमोमहतोनन्तरोहंकारइत्यर्थः अतस्तत्कार्यत्वमन्येषामुपपन्नमित्याह ।

• तत्कार्यतमन्येषा ॥७३॥

ननु प्रकृतिः सर्वकारणमित्यभ्युपगमविरोधीतआह ।

• अद्यहेतुताद्वारापारंपर्येप्यणुवत् ॥७४॥

द्व्यणुकादिद्वाराघटादावणूनामिवमहदादिद्वारासर्वकार्येप्रकृतेः कारणत्वमित्यर्थः ननुप्रकृतिपुरुषयोः पूर्वत्वाविशेषे प्रकृतेरेवकारणत्वे किं नियामकं तत्राह ।

• पूर्वभावित्वेद्वयोरेकतरस्यहानेन्यतरयोगः ॥७५॥

द्वयोः पूर्वत्वेसत्यपि पुरुषस्यापरिणामित्वात्कारणत्वहाने सतिप्रकृतेः कारणत्वौचित्यमित्यर्थः पुरुषस्यापरिणामित्वे वीजं तुलस्य संहत्यकारित्वे परार्थत्वापत्यानवस्था असंहत्यकारित्वेसदामहदादिकार्यप्रसंगः प्रकृतिद्वारापरिणामकल्पने तुलाघवात्तस्यारावपरिणामित्वमस्तु पुरुषे तु स्वामित्वात्स्रष्टृत्वोपचारो यथायोधेषुवर्तमानौ जयपराजयौराज्ञिउपचर्येते तथाफल सुखदुःखभोक्तृत्वेन तत्स्वामित्वादिति प्रकृतेर्युगपत्कारणत्वोपपत्तयेविभुत्वमाह ।

• परिच्छिन्नं न सर्वोपादानं ॥७६॥

यतः सर्वोपादान प्रधानं नातपरिच्छिन्नमित्यर्थः न केवलं सर्वोपादानत्वात् किं तु ।

*** तदुत्पत्तिश्रुतेश्च ॥ ७७ ॥**

तेषां परिच्छिन्नानामुत्पत्तिश्रवणाच्च अथ यदल्पं तन्मर्त्यमिति परिच्छिन्नस्य मरणधर्मकत्वेनोऽत्यवगमादितिभावः इदानींप्रभावादेः कारणतां निरस्यति।

*** नावस्तुनोवस्तुसिद्धिः ॥ ७८ ॥**

नृश्रृंगादिवावस्तुनो ऽभावाद्वस्तुत्पत्तिर्नघटतइत्यर्थः ननु जगदप्यवस्त्वे वास्तुतत्राह।

*** अवाधाददुष्टकारणजन्यत्वाच्चनावस्तुत्वं७९**

स्वप्नपदार्थस्येव प्रपंचस्य वाधोननवाशंखपीति मादेरिवदुष्टेन्द्रियजन्यत्वं अतोनावस्तुकार्यमित्यर्थः नावस्तुनो वस्तुसिद्धिरिति यदुक्तं तत्र हेतुमाह।

*** भावेतद्योगेनतत्सिद्धिरभावेतदभावात् कुतस्तरांतत्सिद्धिः ॥ ८० ॥**

भावरूपेकारणेसत्तायोगेन सत्कार्यसिद्धिः अभावे तु सत्ताभावात् कुतः सत्कार्यसिद्धिः कारणसरूपस्यैवकार्यस्यौचित्यात् तरप्स्वार्थे नन्वेवमप्यावश्यकत्वात्कर्मैवकारणमस्तु किं प्रधानेनतत्राह।

*** नकर्मणउपादानायोगात् ॥ ८१ ॥**

न कर्मणोदृष्टाद्वस्तुसिद्धिः तस्यनिमित्तत्वेनोपादानत्वायोगात् ॥ इदानीं कर्मणां साक्षान्मोक्षाहेतुत्वं प्रतिपादयति पञ्चभिः सूत्रैः।

* नानुश्रवकादपितत्सिद्धिः साध्यत्वेनावृत्ति योगादपुरुषार्थत्वं ॥ ८२ ॥

गुरोरनुश्रूयत इत्यनुश्रवोवेदस्तत्र विहितमानुश्रविकं या गादिकर्मततोपि न पूर्वोक्तपुमर्थसिद्धिः यतःकर्मसाध्यत्वेना-वृत्तियोगात् अपुरुषार्थत्वं अत्यन्तपुरुषार्थत्वाभावः तद्युपा-सकस्य ब्रह्मलोकगतस्यानावृत्तिः श्रुतिः कथं तत्राह ।

* तत्र प्राप्तविवेकस्यानावृत्तिश्रुतिः ॥ ८३ ॥

तत्र ब्रह्मलोके ॥ न स पुनरावर्त्तत इति श्रुतिः ॥ ब्रह्मणा सहते सर्वेसंप्राप्ते प्रतिसञ्चरे ॥ परस्यान्तेकृतात्मनः प्रविशन्ति परं पदमित्यत्रकृतात्मानइत्यस्य स्वरसात् ॥ कीदृक् तर्हि फलं कर्मणस्तदाह ।

*दुखाद्दुःखंजलाभिषेकवन्न जाड्यविमोकः ८४

अनुश्रविकाद्दुखाद् दुःखं दुःखधारेव भवति न तु जा-ड्य विमोकः अविवेकनिवृत्तिः दुःखविमोचस्त्वतिदूरे यथा जाड्यार्तस्यजलाभिषेकाद् दुःखवृद्धिरेव भवति न तु जाड्य विमोचइत्यर्थः अत एवेश्वरकृष्णआह दृष्टवदानुश्रविकः सह्य विशुद्धिक्षयातिशययुक्तइति ॥ ननु निष्कामकर्मणः फलं मोक्षोभविष्यति तत्राह ।

* काम्ये ऽकाम्ये पिसाध्यत्वाविशेषात् ॥ ८५ ॥

काम्ये ऽकाम्येवाकर्मणि कृते तत्फल मत्यन्तपुरुषार्थोन॰ कर्मसाध्यत्वस्य तुल्यत्वात् ॥ ननुज्ञानसाध्यस्य कथमत्यन्तपु-रुषार्थत्वं तत्राह ॥

निजमुक्तस्य बन्धध्वंसमात्रं परं न समानत्वम् ॥ ८६ ॥

निजमुक्तस्य स्वभावमुक्तस्यात्मनो बन्धध्वंसमात्रं परंमुख्यं विवेकज्ञानस्य फलं ध्वंसस्य चाभावत्वेन नित्यत्वान्न दुःखात्मकत्वम् अतो न समानत्वं ज्ञानकर्मणोः । । तस्माद्विवेकज्ञानमेव साक्षाद्धेयहानोपायः । तस्य साक्षादुपायाः प्रमाणानि सम्प्रति परीक्ष्यन्ते ।

द्वयोरेकतरस्य वाप्यसंनिकृष्टार्थपरिच्छित्तिःप्रमा तत्साधकतमं यत्तत्त्रिविधं प्रमाणम् ॥ ८७ ॥

असन्निकृष्टः प्रमातर्यनारूढोऽनधिगतइतियावत् ॥ एवंभूतस्यार्थस्य वस्तुनः परिच्छित्तिरवधारणं प्रमा सा च द्वयोर्बुद्धिपुरुषयोर्धर्मोऽस्तु एकतरस्यैव वा उभयथापि तस्याः साधकतमं फलायोगव्यवच्छिन्नं कारणं यत्तत्प्रमाणम् । तच्च त्रिविधमित्यर्थः स्मृतिभ्रमसंशयानां व्युदासायक्रमेणानधिगत इति वस्तुनइति अवधारणमिति । अत्र यदिप्रमारूपं फलं पुरुषनिष्ठमुच्यते तदाबुद्धिवृत्तिरेवप्रमाणम् यदि बुद्धिनिष्ठं वृत्तिरूपंतत् तदाइन्द्रियसन्निकर्षादिरेवप्रमाणम् यदि तु पौरुषेयबोधो बुद्धिवृत्तिश्चोभयमपि प्रमोच्यते तदोक्तमुभयमेवप्रमाणं भवति । चक्षुरादिषु तु प्रमाणव्यवहारः परंपरयैवेति बोध्यम् ननुयथाप्रकाशयत्येकः कृत्स्नं लोकमिमं रविः क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारतेत्यादिषु

पमानादि प्रकृतिपुरुषविवेके प्रमाणमुपन्यस्तं तत्कथं त्रिविधं प्रमाणं तत्राह ।

* तत्सिद्धौ सर्वसिद्धेर्नाधिक्यसिद्धिः ॥ ८८ ॥

त्रिविधप्रमाणसिद्धौ सर्वस्यार्थस्य सिद्धेर्नप्रमाणाधिक्यं सिद्ध्यति गौरवादित्यर्थः । अत एव मनुनापि प्रमाणत्रयमेवो-पन्यस्तं प्रत्यक्षमनुमानं च शास्त्रं च विविधागमम् त्रयं सुवि-दितंकार्यं धर्मशुद्धिमभीप्सितेति उपमानैतिह्यादीना मनु-मानशब्दयोः प्रवेशः । अनुपलब्धेस्तुप्रत्यक्षे इति गीतावाक्ये त्वि त्यमनुमानमभिप्रेतम् आपादतलमस्तकं कृत्स्नं स्वव्यतिरिक्ते-नैकेन प्रकाश्यं स्वयमप्रकाशत्वात् त्रैलोक्यवदिति । तेजस्यैत-न्यसाधारणं प्रकाशत्वमखण्डोपाधिः प्रकाशव्यवहारनियाम-कतया सिद्ध्यति । पुरुषनिष्ठाप्रमेति मुख्यसिद्धान्तमाश्रित्य प्रमाविशेषलक्षणानि वक्तुमुपक्रमते ।

* यत्संबद्धं सत्तदाकारोल्लेखिविज्ञानं तत्प्र-त्यक्षम् ॥ ८९ ॥

संबद्धं भवत् संबद्धवस्त्वाकारधारि भवति यद्विज्ञानं बु-द्धिवृत्तिस्तत्प्रत्यक्षं प्रमाणमित्यर्थः । अत्र सदित्यन्तं हेतुगर्भं विशेषणम् तथाच स्वार्थसन्निकर्षजन्यत्वमित्याकाराश्रयग्रहणं चक्षुरादिकरणद्वारकबुद्धिवृत्तिस्य प्रदीपस्य शिखेववाह्यार्थस-न्निकर्षानन्तरमेवतदाकारोल्लेखिनी भवतीति नासंभवः । ननु योगिना मतीतानागतव्यवहितवस्तु प्रत्यक्षेऽव्याप्तिः संबद्धव-स्त्वाकाराभावादित्याशंक्यतस्या लक्ष्यत्वेन समाधत्ते ।

* योगिनामबाह्यप्रत्यक्षत्वान्नदोषः ॥ ९० ॥

ऐन्द्रियकप्रत्यक्षमेवात्र लक्ष्यं योगिनस्त्ववाह्यप्रत्यक्षकाः अतो न तत्राव्याप्तिदोषइत्यर्थः । वास्तवं समाधानमाह ।

* लीनवस्तुलब्धातिशयसंबंधाद्वाऽदोषः॥९१॥

अथवाऽस्तुयोगिप्रत्यक्षमपि लक्ष्यं तथापि न दोषोनाऽव्याप्तिः । यतो लीनवस्तुषु लब्धयोगजधर्मजन्यातिशयस्य योगिचित्तस्य संबंधोघटते अत्र लीनशब्दः पराभिप्रेतासन्निकृष्टवाची सत्कार्यवादिनांह्यतीतादिकमपि स्वरूपतोस्तीति तत्सम्बन्धः संभवेदिति व्यवहितविप्रकृष्टेषु संबन्धे हेतुविधया-लब्धातिशयेति विशेषणम् अतिशयश्च व्यापकत्वं वृत्तिप्रतिबन्धकतमोनिवृत्त्यादिश्चेतिज्ञेयम् । ननु तथापीश्वरप्रत्यक्षेऽव्याप्तिः तस्यनित्यत्वेन सन्निकर्षाजन्यत्वात्तत्राह ।

* ईश्वरासिद्धेः ॥ ९२ ॥

ईश्वरेप्रमाणाभावात् अदोषइत्यनुवर्त्तते । अयं चेश्वरप्रतिषेधएकदेशिनां प्रौढिवादेनैव । अत एवेश्वरासिद्धेरित्युक्तं नत्वीश्वराभावादिति बोध्यम् ईश्वराभ्युपगमे तु सन्निकर्षजन्यजातीयत्वमेवविवक्षितं साजात्यं च ज्ञानत्वसाक्षात्त्वाद्याख्य जात्येतिभावः । श्रुतिस्मृतिभ्यां कथमीशो न सिद्ध्येदित्याशङ्क्य तर्कविरोधं बाधकमाह ।

+ मुक्तवद्धयोरन्यतराभावान्नतत्सिद्धिः ॥९३॥

ईश्वरोभिमतोयः स किं क्लेशादिभिर्मुक्तो बद्धो वा अन्यतरस्याप्यसम्भवान्नेश्वरसिद्धिः तदेवाह ।

* उभयथाप्यसत्करत्वम् ॥९४॥

मुक्तत्वे सृष्टिप्रयोजकरागाद्यभावात् बद्धत्वे च मूढत्वात् न सृष्टिकरत्वमीश्वरस्येति सृष्टिकर्तृत्वेनैव ह्यीश्वरः साध्यते-परैः। व्याख्यानात् सृष्टिपरः सच्छब्दो ऽवबोध्यः नन्वेवमपी श्वरप्रतिपादकश्रुतिस्मृत्योः कागतिस्तत्राह ।

+मुक्तात्मनः प्रशंसोपासासिद्धस्य वा ॥९५॥

केचित् श्रुतिस्मृतीमुक्तात्मनः केवलात्मनो ज्ञेयताविधा-नायतस्य सन्निधिमात्रेणैश्वर्येण स्तुतिरूपे केचिच्चउपासना-सिद्धस्यानित्येश्वरस्यैव नित्यत्वाद्युपासनासिद्धये गौणनित्य-त्वादिनास्तुतिरूपे। अधिष्ठातृत्वं कीदृशं तत्राह।

+तत्सन्निधानादधिष्ठातृत्वं मणिवत् ॥९६॥

तत्पुरुषस्य संनिधानात् संयोगात् अधिष्टातृत्वंप्रकृत्यधि ष्टातृत्वं महत स्वरूपेणपरिणामपितृत्वं न तु सङ्कल्पादिना-यथाऽयस्कान्तमणेः सानिध्यमात्रेण । लोहाकर्षत्वं उक्तं च निरिच्छे संस्थिते रत्ने यथा लोहः प्रवर्त्तते सत्तामात्रेण देवेन-तथैवायं जगज्जनिः अत आत्मनिकर्तृत्व मकर्तृत्वंच सं-स्थितं। निरिच्छित्वादकर्त्तासौ कर्तासन्निधिमात्रतइति लौ-किककार्येष्वपि जीवानां सन्निधिमात्रेणैवाधिष्ठातृत्वमित्याह ।

+ विशेषकार्येष्वपिजीवानाम् ॥९७॥

सन्निधानादधिष्टातृत्वमित्यनुषंग। जीवानां कूटस्थचि-न्मात्रत्वादित्यर्थः। ननु नित्यसर्वज्ञेश्वराभावेऽन्धपरंपराशंक-या वेदाप्रामाण्यं स्यादतआह।

+ सिद्धरूपबोद्धृत्वाद्वाक्यार्थोपदेशः ॥९८॥

हिरण्यगर्भादेः सिद्धरूपस्य यथार्थस्य बोद्धृत्वात्तद्वक्तृको वेदवाक्यार्थोपदेशः प्रमाणमितिशेषः। लौकिककार्येषु संकल्पादिनाधिष्ठातृत्वं कस्येत्याकांक्षायामाह।

+ अन्तःकरणस्य तदुज्ज्वलितत्वाल्लोहवदधिष्ठातृत्वम् ॥९९॥

अग्निसंयोगविशेषेण यथा लोहमुज्ज्वलितं तद्वत्प्रतिबिम्ब हेतुसंयोगविशेषेण चेतनोज्ज्वलितत्वाच्चेतनायमानस्यान्याचेतनेभ्योविलक्षणस्यान्त करणस्य संकल्पादिद्वारकमनुपचरितमधिष्ठातृत्वमित्यर्थः। आदिसर्गस्त्वबुद्धिपूर्वकइति न तत्र मुख्याधिष्ठातुरपेक्षा। अत एव कौर्मे इत्येषप्राकृतः सर्गः संक्षेपात्कथितोमया। अबुद्धिपूर्वकस्त्वेष ब्राह्मीं सृष्टिं निबोधतेति तदेक्षतेत्यादि तु कूलं पिपतिषतीत्यादिवत्कार्योन्मुखत्वमादाय कथंचिन्नेयमितिभावः। अनुमानं लक्षयति।

+ प्रतिबद्धदृशः प्रतिबद्धज्ञानमनुमानं ॥१००॥

प्रतिबन्धोव्याप्तिः तद्युक्तं तन्निरूपकं च प्रतिबद्धं तथा च व्याप्यदर्शनाद्व्यापकज्ञानं वृत्तिरूपमनुमानं प्रमाणं अनुमितिस्तुपौरुषेयो बोधः शब्दप्रमाणं लक्षयति।

+ आप्तोपदेशः शब्दः ॥१०१॥

आप्तोयोग्यः शब्दस्तदुपदेशस्तज्जन्यं ज्ञानं शब्दाख्यं प्रमाणं। प्रमाफलञ्चापि पौरुषेयोबोधः। प्रमाणप्रतिपादनस्य फलमाह।

+उभयसिद्धिः प्रमाणात्तदुपदेशः ॥१०२॥

आत्मानात्मनोर्विवेके न सिद्धिः प्रमाणादेव भवति अतः प्रमाणोपदेशः कृतः येनानुमानविशेषेण तत्सिद्धिस्तदाह ।

+सामान्यतोदृष्टादुभयसिद्धिः ॥१०३॥

अनुमानं त्रिविधं । पूर्ववत् शेषवत्सामान्यतो दृष्टं च तत्र प्रत्यक्षीकृतजातीयविषयकं पूर्ववत् यथा धूमेनवह्न्यनुमानं वह्निजातीयो हि महानसादौ पूर्वं प्रत्यक्षीकृतः । व्यतिरेक्य-नुमानं शेषवत् शेषोपूर्वार्थोऽस्य विषयत्वेनास्तीति अप्रसिद्ध-साध्यकमितियावत् यथा पृथिवीत्वेनेतरभेदानुमानं पृथिवीत-रभेदो हि प्रागसिद्धः तदुभयभिन्नमनुमानं सामान्यतोदृष्टंयश्च सामान्यतः प्रत्यक्षादिजातीयमादाय व्याप्तिग्रहात् पक्षधर्म-तावलेन तद्विजातीयोऽप्रत्यक्षाद्यर्थः सिद्ध्यति यथा रूपादिज्ञा-ने नानाक्रियात्वेन करणवत्त्वानुमानम्(अत्र हि पृथिवीत्वादि जातीयं कुठारादि करणमादायव्याप्तिं गृहीत्वा तद्विजाती यमतीन्द्रियं ज्ञानकरण वत्त्वानुमानम् )अत्र हि पृथिवीत्वादि जातीयं कुठारादिकरण मादायव्याप्तिं गृहीत्वातद्विजातीय मतीन्द्रियज्ञानकरणमिन्द्रियं साध्यते । तत्रसामान्य तोदृष्टाद् नुमानात् प्रकृतिपुरुषयोः सिद्धिः महत्तत्वं सुखदुःख मोहधर्मं कद्रव्योपादानकं कार्य्यत्वे सतिसुखदुःखमोहधर्मकत्वात् सुव र्णादिजकुण्डलादिवदिति । प्रकृतौ प्रधानंपरार्थं संहत्य का-रित्वादिति पुरुषेसामान्यतोदृष्टं वोध्यं प्रमाणफलं भूतसिद्धेः पुरुषनिष्ठत्वेपुरुषस्य परिणामितापत्तिरित्या शङ्क्य तस्याः स्वरूपमाह ।

* चिदवसानोभोगः ॥१०४॥

अत्रप्रमाणाख्यवृत्त्यारूढं पदार्थजातं वृत्त्यासहपुरुषे प्रतिबिम्बतं यन्नासतेसभोगः प्रमाणफलं सच अर्थोपरक्त वृत्तिप्रतिबिम्बावच्छिन्नचैतन्यस्वरूपेपर्यवसितस्तत्स्वरूप एव यतः अतोनोक्तग्रद्धेतिभावः ननुबुद्धिकृत धर्माधर्मफलस्यात्मनि भोगः कथमतआह ॥

+ अकर्तुरपिफलोपभोगोऽन्नाद्यवत् ॥१०५॥

यथान्यकृतस्यान्नादेरुपभोगो राज्ञोभवति तथा बुद्धिकृत धर्माधर्मफलस्य सुखदुःखस्योपभोगः पुरुषः अविवेकस्यस्वस्वामि भावस्यवानियामकत्वान्नातिप्रसङ्गः सुख दुःखादेः कर्मफलत्वंस्वीकृत्य बुद्धिगतं कर्मफलंपुरुषोभुंक्तइत्युक्तं इदानीं पुरुषगतभोगस्यैव कर्मफलत्वस्वी कृत्यबुद्धिकर्मणा पुरुष एव फलमुत्पद्यत इतिमुख्य सिद्धान्तमाह।

+अविवेकाद्वातत्सिद्धेः कर्तुःफलावगमः ॥१०६॥

अथवोकर्तृबुद्धौ जायमानं सुखदुःखं फल मेवनभवति सुखंभुंजीयेत्यादिकामनया भोगस्यैव फलत्वात् अथवाअविवेकात्पुरुषस्य कर्तृत्वसिद्धिः ततःकर्त्तुः पुरुषस्य य एवकर्ता स एवभोक्तेति कर्मफलावगमः अतोभोक्तृनिष्ठमेवफलंभवति तर्हिशास्त्रविहितं फलमनुष्ठात्तरोति शास्त्रव्यवहारः कथं तत्राहतत्सिद्धेरकर्तृनिष्ठायाभोगाख्यसिद्धेःकर्तृबुद्धावविवेकात् कर्त्तुःफलावगमः शास्त्रेषु इतिशेषः योहंकरोमि सएवाहं भुंज इतिलौकिकानुभवात् यातुसुखंमे भूयादितग्रादिः कामनामौ पुत्रोमे भूयादितिवत् फलसाधनत्वेनाप्युपपद्यतेभोग

स्तुनान्यस्य साधनमिति स एव फलमिति मुख्यसिद्धांत: भो-गस्यपुरुषस्वरूपत्वेपि अवच्छिन्नरूपेण कार्य्यताबोध्या सुखा द्यवच्छिन्नचितेरेव कार्यत्वात् प्रमाणफलत्वेनोक्ताया विवेक सिद्धेः फलमाह।

+ नोभयंचतत्त्वाख्याने ॥१०७॥

प्रमाणेन तत्वाख्याने प्रकृतिपुरुषयो: साक्षात्कारेसंति सुखं दुःखंचनभवतीत्यर्थः विद्वान् हर्षशोकौ जहातीति श्रु-तेश्च ननुप्रकृतिर्यदस्ति कुतोनप्रत्यक्षातस्मान्नास्तीति तत्राह।

• विषयो ऽविषयोप्यतिदूरादेर्हानोपादा-नाभ्यामिंद्रियस्य ॥१०८॥

उपादानंसंबंधः हानंतदभावः इंद्रियस्यसंबंधासम्बन्धाभ्यां प्रत्यक्षविषयःप्रत्यक्षाविषयश्च पदार्थो भवतिप्रत्यक्षा विषयत्वे हेत्वंतरमतिदूरादेरिति अतिदूरादितीश्वर कृष्णः संजग्राह अतिदूरात्सामीप्यादिंद्रियघातान्मनोनवस्थानात् सौक्ष्म्याद्व्य वधानादभिभवात्समानाभिहाराच्चेति उदाहरणानितुकौमु-द्यांव्यक्तानि प्रकृत्यनुप लब्धौकारणमाह।

+ सौक्ष्म्यात्तदनुपलब्धिः ॥ १०९ ॥

तस्याःप्रकृतेर नुपलब्धिः अप्रत्यक्षता अत्रसूक्ष्मत्वं प्रत्य-क्ष प्रमाप्रतिबिंबको धर्मविशेषः योगजधर्मस्योत्तेज कत्वाच्च-योगिनांसूक्ष्ममपि प्रत्यक्षं भवतीतिनत्वभावा देवानुपलब्धि-रस्तांकिंसौक्ष्म्यं कल्पनेनातआह।

+ कार्य्यदर्शनात्तदुपलब्धेः ॥११०॥

महदादि रूपकार्यदर्शनेनतस्याः प्रामाणिकत्वात् ननु ब्रह्मजगतः कारणमितिकेचित् परमाणव इत्यपरे कथं प्रकृते रेवप्रामाणिकत्वं इतिशंकते ।

+वादिविप्रतिपत्तेस्तद सिद्धिरितिचेत् ॥१११॥

तस्याः प्रकृते कार्येण कारणानुमानेन नकश्चिद्दोष इत्याशयेन समाधत्ते ।

+तथा प्येकतरदृष्टैय कतरसिद्धेनापलापः ११२

कार्यदृष्ट्या कारणसिद्धेर्नकारणा पलापइत्यर्थः इदानीं प्रकृतेरेव कारणत्वे युक्तिमाह ।

÷ त्रिविध विरोधापत्तेश्च ॥११३॥

जगतिउपलभ्यमानस्य सुखदुःख मोहात्मकत्वस्यविरोधः स्यात् ब्रह्मणः प्रमाणूनां वा कारणत्वे इदानींकार्यस्योत्पत्तेः प्रागपिसत्वं व्यवस्थापयति ।

+ नासदुत्पादोनृशृंगवत् ॥११४॥

नृशृंग तुल्यस्यासत् उत्पादोन संभवति तत्रहेतुमाह ।

+ उपादान नियमात् ॥११५॥

उपादानेमृदादौ कार्यस्यघटादेर्नियमात् उत्पत्तेः प्राक्कारणे कार्यासत्तायांन कोपिविशेषोस्ति येनमृद घटमेवासतंजनयेन्नपटादितंतवश्चपटमेवासतंजनयेत् पुनर्घटादि कार्य सत्तायांतु विशेषांगीकारे भावत्वापत्तिः उपादाननियमे प्रमाणमाह ।

+ सर्वत्रसर्वदासर्वा संभवात् ॥११६॥

सर्वासंभवात्सर्वानुत्पत्तेः लोकेदर्शनादितिशेषः इतश्चना-सदुत्पाद इत्याह ।

+ शक्तस्यशक्य करणात् ॥११७॥

कार्यशक्तिमत्वमेवाह्य पादानकारणत्वंश क्तिश्च कार्यस्या नागतावस्थैवेति शक्तस्यकारणस्य शक्तकार्यकारणादपिना-सतउत्पाद इत्यर्थः किंच ।

+ कारण भावाच्च ॥ ११८ ॥

कार्यस्यकारणात्मकत्वादित्यर्थः नहिकार्यकारण योरभेदे कारणंसत् कार्यं त्व सदिति संभवति कार्यस्य कारणाभेदसा-धकान्युक्तानितत्व कौमुद्यां नपटस्तंतुभ्योभिद्यतेतद्धर्मत्वात् इहयद्यतोभिद्यते नतत्तस्यधर्म्मो यथा गौरश्वस्यसंयोगा प्राप्त्य भावश्चार्थांतरत्वा भावसाधकः अर्थांतरत्वे हि संयोगोदृष्टो यथा कुंडवदरयोः अप्राप्तिर्वा यथाहिम वद्विंध्ययोः नचेहसंयो-गाप्राप्ती तस्मान्नार्थांतरत्वं गुरुत्वांतरकार्याग्रहणं च कार्यका-रणयोरभेदसाधकं इहहियद्यस्माद्भिन्नं तस्मात्तस्य गुरुत्वांतर कार्यं दृश्यते पलिकस्यस्वस्तिकस्य गुरुत्वकार्योयो बनतिविशे-षस्ततो द्विपलकस्यस्वस्तिकस्य गुरुत्वकार्यो बनतिभेदोधिकः स्पष्ट एव तस्मादभिन्नस्तंतुभ्यः पटइति स्वात्मनिक्रिया विरो-ध बुद्धिव्यपदेशार्थं क्रियाभेदाश्चनै कांतिकंभेदंसाधयितुमर्ह-ति एकस्मिन्नपितत्तद्विशेषाविर्भाव तिरोभावाभ्यामेते षाम-विरोधात् यथाहि कूर्मस्यांगानि कूर्मशरीरेनिविशमानानि-

तिरोभवंतिनिः सरंतिचाविर्भवति नतुकूर्मतस्तदंगानि उत्प-द्यंतेप्रध्वंसतेवा एव मेकस्मात्सृदः सुवर्णंस्यवा तेतेकूटमुकुटा दयोनिः सरंतः आविर्भवंति उत्पद्यंतेइत्युच्यते निविशमाना स्तिरोभवंति विनश्यंतीत्युच्यते नपुनरसतामुत्पादः सतांवाना शः यथाचकूर्मः स्वावयवेभ्यः संकोचविकासिभ्योनभिन्नः एवं कूटमुकुटा दयोपिमृत्सुवर्णादिभ्योनभिन्नाः इहतंतुषुपट इ-त्यादिबुद्धिव्यपदेशभेदा अपि इहवनेतिलका इतिवदुपपन्नाः नचार्थक्रिया भेदोपि भेदमापादयति एकस्यापिनानार्थक्रि-यासंदर्शनात् यथैव वह्निर्दाहकः पाचकश्चेतिनाप्यर्थक्रिया-व्यवस्थावस्तु भेदहेतुः तेषामेव व्यस्त समस्तानामर्थक्रियाव्य-वस्थःदर्शनात् यथाप्रत्येकंविष्टयो दर्शनलक्षणामर्थं क्रियांकु-र्वंति नतुशिविकावहनं मिलतास्तुशिविका मुद्वहंति एवं तंतवः प्रत्येकंप्रावरण मकुर्वाणा अपि आविर्भूतपटभावाः प्रावरिष्यंतीति शंकते ।

## + नभावे भावयोगश्चेत् ॥ ११९ ॥

कार्यस्यउत्पत्तेः प्रागपिभावे तद्रूपेसति उत्पत्तियोगोन-चेत् असतएवोत्पत्तिव्यवहारात् समाधत्ते ।

## +नाभिव्यक्तिनिबंधनौव्यवहाराव्यवहारौ१२०

कार्योत्पत्तेर्व्यवहाराव्यवहारौ कार्याभिव्यक्ति निमित्त कौअभिव्यंक्तिात उत्पातिव्यवहारोभिव्यक्त्यभावाच्चोत्पत्ति व्यव-हाराभावोनत्वसतः सत्तयाअभिव्यक्तिश्चन ज्ञानंकिंतुवर्त्तमा-नावस्था कारणव्यापारोपि कार्यस्यवर्त्तमान लक्षणमेवपरि-

णामेवजनयति दृष्टं चसतः कार्य्यस्यकारणादभिव्यक्तिमात्र लोकेपि यथा शिलामध्यस्थ प्रतिमायाः लौकिकव्यापारेणा भिव्यक्ति मात्रं तिलस्थतैलस्यनिष्पी डनेनधानस्थतंडुला देर-वघातेनचेतिनाश स्वरूपमाह ।

+ नाशः कारणलयः ॥ १२१ ॥

लीङ्श्लेषण इतिधात्वनुसाराल्लयः सूक्ष्मतया कारणेष्व-विभागः सएवातीता वस्थाख्योनाश इत्युच्यतेअनागताख्य-स्तुलयः प्रागभावइत्युच्यते इतिशेषः लीनंकार्य्यव्यक्तं स्तुपुनर-भिव्यक्तिर्नास्ति प्रत्यभिज्ञाद्यापत्यापातं जलेनिराकृतत्वात् प-रेषामिवास्माकमप्य नागतावस्थायाः प्रागभावाख्यायाः अभि व्यक्तिहेतुत्वाच्चे तिकेचित् अपरेतुयदिलयोनाशः पुनरुत्पत्तोपि-दृश्येत् नचदृश्यते इतिआशंक्यमूढेनं दृश्यतंविवेचकेर्दृश्यतएव तथाहि तंतौनष्टे मृद्रूपेणपरिणामः मृदश्चकार्पासवृत्तरूपेणप-रिणामः तस्यपुष्पफलतंतुरूपेणपरिणामः एवंसर्वेभावाइत्याहुः नन्वतीतमप्यस्तीत्यत्रकिंप्रमाणं नह्यनागतसत्तायांतदेदंतर्ह्य व्याकृतमासीत् तन्नामरूपाभ्यामेवव्याक्रियतइत्यादयः श्रुत्या-दयइवातीतसत्तायां किंचित्प्रमाणमुपलभ्यते स्पष्टमितिचेत् अत्राहुः केचिदभियुक्ताः योगिप्रत्यक्षान्यथानुपपत्योरनागता तीतयोरुभयोः सत्तासिद्धेः प्रत्यक्षसामान्ये विषयस्यहेतुत्वात् अन्यथावर्त्तमान स्यापिप्रत्यक्षेणासिद्ध्यापत्तेः तस्मान्नियामौ-त्सर्गिकप्रामाण्ये नासतिबाधकेयोगिप्रत्यक्षेणातीतमपिसिद्ध्य-ति योगिनामतीताना गतप्रत्यक्षेच श्रुतिस्मृतीति हासादिकं प्रमाणमिति नन्वभिव्यक्तिरपि पूर्वं सतो असतोवा आद्ये का

रण व्यापारात्प्रागपि कार्यस्या भिव्यक्त्या स्वकार्यजनकतापत्ति; कारणव्यापारवैयर्थ्यं च असती चेत् सत्कार्यवाद हानि: अथ सत्त्या एवाभिव्यक्ते रभिव्यक्त्य न्तरार्थं कारण व्यापारस्तर्ह्य नवस्थाइत्याशङ्कायामाह।

पारंपर्यतोन्वेषणाबीजांकुरवत् ॥ १२२ ॥

परम्परारूपेणाभिव्यक्ते: स्वीकार: कार्य: बीजांकुरवत् प्रामाणिकत्वात् बीजांकुराभ्यां चायमेवविशेषो यद्बीजांकुर स्थले क्रमिकपरं परयाऽनवस्था अभिव्यक्तौचैक कालिकपरं परयेतिप्रामाणिकत्वं तु तुल्यमेवअचबीजांकुर दृष्टांतोलोक दृष्ट्योपन्यस्तोवस्तुतो जन्मकर्मादि वदित्यत्रैव तात्पर्यं तेन बीजांकुरप्रवाहस्यादिसर्गा वधिकत्वे मा न वस्थाविरहेपि न-क्षति: आदिसर्गेहिवृक्षं विनैव बीजमुत्पद्यते हिरण्यगर्भ सङ्कल्पेन तच्छरीरादिभ्य इति प्रसिद्धं तत्रतत्र अतएवविष्णु पुराणे यथाहि पादपोमूलस्कन्ध शाखादिसंयुत: आदिबी जाप्रभवति बीजान्यन्यानि वैततइति वस्तुतस्त्व नवस्थापिना स्वीत्याह।

उत्पत्तिवद्वाऽदोष: ॥ १२३ ॥

यथाघटोत्पत्ते रुत्पत्ति: स्वरूपमेवपरै: स्वीक्रियते लाघवा-त्तथा अस्माभिर्घटाभिव्यक्ते रभिव्यक्ति: स्वरूपमिष्टव्या तथाचो-त्पत्ताविवा भिव्यक्तावपि नानवस्थादोष इत्यर्थ: अथाभिव्यक्ते रभिव्यक्त्यंतरा नङ्गीकारेकारणव्यापारात्प्राक्तस्या: सत्त्वानुप पत्त्यासत्कार्यवादक्षतिरितिचेन्न सतएवाभिव्यक्तिरित्येव स-

त्कार्यसिद्धांतात् अभिव्यक्तेस्वा भिव्यक्तप्रभावेनतस्याः प्रागसत्वेपि नासत्कार्यवादापत्तिरिति नन्वेवंमहदादीना मेवप्राग सत्वमिष्यतांकि मभिव्यक्त्याख्यावस्थाकल्पने नेतिचेत् अत्रा हुरभियुक्ताः तद्धेदमित्यादि श्रुतिभिरव्यक्ता वस्थयासतामेव कार्याणाम भिव्यक्तिसिद्धिः अथैवमभिव्यक्तेः प्रागभावादिस्वी कारापत्तिः नतिस्तषामनागताद्य वस्थानांमन्योन्यमन्योन्याभा वरूपतयो पगमात् तादृशा भावनिवृत्त्यैव कारण व्यापारसा फल्यादि संभवात् अयमेवहि सत्कार्यवादिना मसत्कार्यवादि भ्योविशेषो यत्ते रूच्यमानौ प्रागभाव प्रध्वंसौकार्यस्या नागता तीतावस्थे भावरूपे उच्येते वर्तमानताख्या चाभिव्यक्तव स्थाघटात् व्यतिरिक्ता घटादेरवस्थात्र यवतानुभवादिति ना धिक्यमसत्कल्पना यामिति एवंसत्कार्य मुपपाद्य प्रधानात्कार्याणांवैधर्म्यं वदति॥

* हेतुमदनित्यमव्यापिसक्रियमनेकमाश्रितंलिङ्गं ॥ १२४ ॥

अत्रव्यक्तमितिपूरणीयं तच्चोद्देश्यं हेतुमत्वादयस्तत्र विधीयंते हेतुमत् कारणवत् अनित्यं विनाशि तिरोभावीतियावत् अव्यापि सर्वपरिणामिनव्याप्नोतिकारणेनहि कार्यमाविष्टं न कार्येण कारणं नचबुद्ध्यादयः कार्यव्याप्नुवन्तीत्यव्यापकं व्यक्तं सक्रियंपरिस्पन्दवत् बुद्ध्यादयोह्युपात्तमुपात्तं देहंत्यजन्तिदेहांतरं चोपादत इति तेषां परिस्पन्दः शरीर पृथिव्यादीनांच परिस्पंदः प्रसिद्ध एव अनेकं प्रतिपुरुषंबुद्ध्या दीनां भेदात् पृथिव्याद्यपिहि शरीर घटादि भेदेनानेकं एव आश्रितं स्वकारण

माश्रितं बुद्ध्यादिकार्यं अभेदेपि कथं चिद्भेद विविच्यताऽऽश्रया श्रयिभावद्युक्तं लिङ्गं प्रधानस्येति विशेषः बुद्ध्यादयोहि प्रधानस्य लिङ्गं नतुप्रधानं पुरुषलिङ्गं भवतोतिभावः ईश्वर कृष्णेन तुसावयवं परतन्त्र मितिवैधर्म्यं द्वयमधिकमुक्तं अव-यवमनवयवः मिश्रणं संयोगमिति यावत् अप्राप्ति पूर्विकाप्रा-प्तिः संयोगस्तेनसहवर्तत इति सावयवं तथाहि पृथिव्यादयः परस्परंसंयुज्यंते एवमन्येपि नतुप्रधानस्य बुद्ध्यादिभिः संयो-,गः तादात्म्यात् नापिसत्वरजस्तमसां परस्परं संयोगः अप्राप्तेरभावात् परतन्त्रं बुद्ध्याद्दिस्वकार्येऽहं कारंजनयित वेग्रप्रकृत्यापूरोऽपेक्ष्यते अन्यथातुक्षीणासतीनाल महंकारं-जनयितु मितिस्थितिः एवमहंकाराद्यादिभिरपि स्वकार्यंजनन इति सर्वं स्वकार्ये प्रकृत्यापूरमपेक्ष्यते तेन प्रकृतिपरामपेक्ष-माणं कारणमपिकार्योपजनने परतन्त्रं व्यक्तएतद्विपरीतम व्यक्त मित्यर्थादुक्तं भवति तदेतदुक्तं सावयवं परतन्त्रंव्यक्तं विपरीतमव्यक्तं हेतुमत्वादिकं कार्यकारणयोर्भेद एव सिद्ध्यतीत्यतः कार्यस्यकारणाद्भेदे प्रमाणमाह ॥

\+ आंजस्याद्भेदतो वा गुणसामान्यादेस्त-त्सिद्धिः प्रधानव्यपदेशाद्वा ॥ १२५ ॥

तत्सिद्धिः कार्यस्यकारणातिरेकेणसिद्धिः क्वचिदांजस्यात् प्रत्यक्षतएवानायासेनभवति यथास्थूल्यादिनातंत्वादिभ्यःपदा दीनांक्वचित्तुगुणसामान्यादेरभेदतः गुणसामान्याद्यात्मकत्वा-त् लिंगाद्यथाध्यवसायादि गुणात्मकत्वरूपेणकारणवैधर्म्यं-

णमहदादीनां यथावामहापृथिवीत्वादि सामान्यात्मकत्वरू-पेणतन्मात्रवैधर्म्येण पृथिव्यादीनां आदिशब्दगृहीतेन कर्मा-त्मकता वैधर्म्ये णस्थिराविभ्योर्व्यतिरिक्तस्य चंचलावयविनः प्रधानव्यपदेशाच्च प्रधीयतेस्मिन्कार्यमितिहि प्रधानंएतच्चका-र्यकारणयोर्भेदाभेदौ विनानंघटते अत्यंताभेदेस्वस्याधारत्वा संभवात् वाशब्दश्चार्थे इदानींकार्य साधर्मकतया कारणानु-मानायकार्यकारणयोः साधर्म्यं दर्शयति ।

• त्रिगुणाचेतनत्वादिद्वयोः ॥ १२६ ॥

त्रिगुणत्वंसुखदुःखमोहात्मकत्वं आदिशब्दग्राह्याणीश्वर-कृष्णः संजग्राह त्रिगुणमविवेकविषयः सामान्यमचेतनंप्रस-वधर्मिव्यक्तं तथाप्रधानं तद्विपरीतस्तथाचपुमानिति ॥ अ-विवेकिविषय इत्येकंपदं अन्नैरेवदृश्यमितितदर्थः अविवेक विषयइतिद्वेधा अविवेकित्वं संभूयकारित्वंविषयत्वं भोग्यत्वं सामान्यं सर्वपुरुषसाधारणं पुरुषभेदेप्यभिन्नमितियात् प्र-सवधर्मिपरिणामि प्रधानाख्यानांजगत्कारणगुणानांअन्यो-न्यविवेकायतेषाम नांतरवैधर्म्यमाह ।

• प्रीत्यप्रीतिविषादाद्यैर्गुणानामन्योन्यं-वैधर्म्यं ॥ १२७ ॥

गुणानांसत्वादीनां अन्योन्य सुखदुःखमोहाद्यैर्वैधर्म्यं का-र्येषुतद्दर्शनात् सुखादिकंचघटादेरूपादिवदेवधर्मोन्तः करणो-पादानकत्वादन्यकार्याणामिति प्राक्निरूपितं अत्रादिशब्द-ग्राह्याः पंचशिखाचार्य्यैरुक्ताः सत्वंनाम प्रसादलाघवाभिष्वं

गप्रीति तितिक्षा संतोषरूपान्तभेदं समासतः सुखात्मकं एवंरजोपिशोकादिनानाभेदं समासतो दुःखात्मकंएवंतमोपिनिद्रादिनानाभेदं समासतोमोहात्मकमिति इदानींतेषामेव साधर्म्यवैधर्म्यमाह।

* लघ्वादिधर्मैः साधर्म्यंवैधर्म्यंच गुणानां ॥ १२८ ॥

लघ्वादीतिभावप्रधानोनिर्देशः लघुत्वादिधर्मेण सर्वासांसत्वव्यक्तीनांसाधर्म्यं वैधर्म्यंच रजस्तमोभ्यामेवं च लघुत्वादिधर्मेण सर्वासांरजोव्यक्तीनांसाधर्म्यं सत्व तमोभ्यां च वैधर्म्यं एवं गुरुत्वादिधर्मेण सर्वासांतमोव्यक्तीनां साधर्म्यं सत्वरजोभ्यांवैधर्म्यमिति अत्रलघुत्वादीनांसाधर्म्यत्वकथनात्सत्वादीनां कारणद्रव्याणां प्रत्येकमनेकव्यक्तिकत्वंभाति समानानां धर्म्यस्यैवसाधर्म्यत्वात् एवमेवसिद्धांत इतिकेचित् नच मूलकारणस्यानंतव्यक्तिकत्वे वैशेषिकसमतात्कोविशेष इतिचेत् कारणद्रव्यस्यशब्दस्पर्शादिराहित्यमेव शब्दस्पर्शविहीनंतुरूपादिभिरसंयुतंत्रिगुणं तज्जगद्योनिरनादिप्रभवाप्ययमिति विष्णु पुराणा द्यनुसारादितिच तएवसमादधुः अन्ये तुलघुत्वादिधर्मैर्वैधर्म्यं साधर्म्यं तु अन्योन्याभिभव जननमिथुन वृत्तित्वेनेत्याहुः अत्रेश्वरकृष्णाआहसत्वं लघु प्रकाशमिष्ट सुपष्टंभक चलञ्चरजः गुरुवरणकमेवतमः प्रदीपवच्चार्थतोवृत्तिरिति ॥ १३ ॥ अर्थतः पुरुषार्थतः प्रीत्य प्रीतिविषादात्मकाः प्रकाशप्रवृत्ति नियमार्थाः अन्योन्याभि

भवाश्रयजननमिथुन वृत्तयश्च गुणाइति ॥ १२ ॥ अस्यार्थः प्रीतिः सुखं अप्रीतिः दुःखं विषादोमोहः एतदात्मकाः क्रमेण सत्वरजस्तमआख्यागुणाः गुणाइति परार्था एषांप्रयोजनमाह प्रकाशप्रवृत्ति नियमार्थाः रजः प्रवर्तकतयासत्वं लघुसर्वं चप्रवर्त्तयेद्यदितमसागुरुणाननियम्येत तमोनियमितंतु क्वचिदेव प्रवर्त्तयतीति भवति तमोनियमार्थं प्रयोजनमुक्त्वा क्रियामाह अन्योन्येत्यादि वृत्तयइत्यंतेनवृत्ति.क्रियामाच प्रत्येकमभि सम्बध्यते अन्योन्याभि भववृत्तयः एतेषांमन्यतमेनार्थवशादुद्भूते नान्यतमोभिभूयते तथाहि सत्वंरजस्तमसो अभिभूयशांतामात्मनो वृत्तिं प्रतिलभते एवंरजः सत्वतमसौ अभिभूयघोरां एवंतमः सत्वरजसो अभिभूय मूढामिति अन्योन्याश्रयवृत्तयः यदपेक्षया यस्यक्रिया सतस्याश्रयइत्युच्यते तथाहि सत्वं प्रवृत्ति नियमावाश्रित्यरजस्तमसोः प्रकाशेनोप करोतिरजः प्रकाशनियमावाश्रित्य प्रवृत्येतरयोः तमः प्रकाशप्रवृतो आश्रित्यनियमेने तरयोरिति अन्योन्यजननप्रवृत्तयः अन्यतमोऽन्यतममपेक्ष्यजनयति जननंचपरिणामः सचगुणनांसास्वरूपः अन्योन्यमिथुनवृत्तयः अन्योन्यसहचराः अविनिर्भागवर्तिन इतियावत् च समुच्चये भवतिचात्रागमः अन्योन्यमिथुना सर्वेसर्वेसर्वत्रगामिनः रजसोमिथुनंसत्वं सत्वस्यमिथुनंरजः तमसस्यापि मिथुनेतेसत्वरजसो उभेउभयोः सत्वरजसो मिथुनंतम उच्यतेनेषामादिः संप्रयोगोविभागोवोपलभ्यते इतितत्वकौमुद्यां अलमधिकेन महदादीनांकार्यत्वे प्रमाणमाह ।

उभयान्य त्वात्कार्यत्वं महदादेर्घटा -
दिवत् ॥ १२९ ॥

महदादि पंचभूतांतंतावन्नपुरुषोभोग्यत्वात् नापिप्रकृति-र्मोचान्यथानुपपत्याविनाशित्वात् अत; प्रकृतिपुरुषभिन्नंत, च्छिन्नत्वाच्च कार्यं घटादिवत् हेत्वंतरमाह ।

परिमाणात् ॥ १३० ॥

परिच्छिन्नत्वादित्यर्थ;किंच ।

समन्वयात् ॥ १३१ ॥

उपवासादिनाचीर्णं बुद्यादितत्वमन्नादिभि; समन्वयेन समनुगमेनपुनरुपचीयते अत; समन्वयात् कार्यत्वमुन्नीयते नित्यस्याहिनिरवयवतया अवयवानुप्रवेशरूप; समन्वयोनो-पपद्यतइति समन्वये च प्रमाणं श्रुतिः अभियुक्तैरुदाहृताम-नः प्रकृत्यएवतेसोम्य षोडशानां कलानामेकाकलाति शिष्टा भूत्सान्नेनोप समाहिता प्राज्वालीदिति;किञ्च ॥

+ शक्तितश्चेति ॥ १३२ ॥

करणतश्चेत्यर्थः पुरुषस्य यत्करणं चक्षुरादि तत् कार्यमि-ति महत्तत्व मपिकार्यं अन्येषांतुसुतरां कार्यत्वमिति च शब्दः इति शब्दश्च हेतुवर्ग समाप्त्यर्थः यदिच महदादिषुमध्ये किञ्चिदकार्यं स्वोक्रियते तदापि तदेव प्रकृतिः पुरुषोवेति सिद्धंनःसमीहितं प्रकृतिपुरुषविवेक एवास्माकन्तात्पर्य्या दित्याह ॥

• तद्धानेप्रकृतिःपुरुषोवा ॥ १३३ ॥

तद्दानेकार्यत्वहानेयदि परिणामितदा प्रकृतिः यद्यपरिणामि भोक्ता तदापुरुषः नन्वकार्यमप्युभयभिन्नं स्यात्तत्राह

तयोरन्यत्वेतुच्छत्वं ॥ १३४ ॥

अकार्यं हि कारण तयाभोक्तृतयावासिद्धमितिनान्यथेत्यर्थः प्रकृत्यनुमाने ऽनुक्तं विशेषमाह ॥

• कार्यात्कारणानुमानं तत्साहित्यात्॥१३५॥

तत्साहित्यात्कार्यसाहित्यात् महदादिकं स्वोपहित त्रिगुणात्मकवस्तूपादानकं कार्यत्वात् शिलामध्यस्थ प्रतिमादिवत् तैलादिवच्चेति कार्यविशिष्टतयैव कारणानुमानं नतुताटस्थ्येनपरेषामिवेतिभावः प्रकृतेः कार्याद्विवेकार्थं वैधर्म्यमाह ॥

• अव्यक्तंत्रिगुणाल्लिङ्गात् ॥ १३६ ॥

अभिव्यक्तात् त्रिगुणात्कार्यात् महत्तत्वादेरपि प्रधानमव्यक्तं सूक्ष्मं तदीयोगुणोपि सुखादिर्न साक्षात्क्रियते इति भावः नचसूक्ष्मत्वात्तस्यापलापएवोचित इत्याह ॥

+ तत्कार्य्यतस्तत्सिद्धेर्नापलापः ॥ १३७ ॥

स्पष्टं प्रकृत्यनुमान गता विशेषा विचारिताः अतः परं पुरुषानुमान गतान् विशेषान् दर्शयति आअध्यायसमाप्तेः ।

•सामान्येन विवादाभावाद्धर्मवन्नसाधनं१३८

यत्र वस्तुनि सामान्यतो विवादोनास्ति नतस्यस्वरूपतः

साधनमपेक्ष्यते धर्मस्यैव अयंभावः चेतनापलापे जगदांध्य प्रसंगादिना भोक्तार्यहं पदार्थेन कस्यापि विवादस्तस्मात् पुरुषस्य देहादिव्यतिरिक्त नित्यत्वादि सिद्ध्यर्थमेव प्रमाणापेक्षानस्वरूपसिद्ध्यर्थं तस्यसर्ववादिपामर सिद्धत्वात् यथा धर्मसामान्येन कस्यापि विवादः बौद्धैरपि तमशिलारोहणादिषुधर्मत्वाभ्युपगमात् किंतुविशेष सिद्ध्यर्थमेव प्रमाणापेक्षेति तथैवाह ।

+ शरीरादिव्यतिरिक्तः पुमान् ॥ १३९ ॥

पुमान् द्रष्टाशरीरा दिव्यतिरिक्त इतिसाध्यं अत्रहेतूनाह सूत्रैः ।

• संहतपरार्थत्वात् ॥ १४० ॥

उक्तार्थमेतत्सूत्रं उक्तस्यापिहेतोर्हेतु वर्गसंकलनार्थः पुनरुपन्यासः ।

+ त्रिगुणादिविपर्ययात् ॥ १४१ ॥

सुखदुःख मोहात्मकता दिविपर्ययादित्यर्थः आदिशब्दादचेतनत्वादि ग्रहणं ॥

+ अधिष्ठानाच्चेति ॥ १४२ ॥

अधिष्ठातृत्वाच्चेत्यर्थः संयोगविशेषेण परिणाम हेतुत्व मधिष्ठातृत्वं संयोगश्च भिन्नयोरेवेति भाव; इतिहेतु समाप्तौ उक्तानुमाने ऽनुकूलंतर्कं प्रदर्शयति सूत्राभ्यां ॥

•भोक्तृभावात् ४३ कैवल्यार्थं प्रवृत्तेश्च १४४

यदिशरीरादि स्वरूपएव भोक्तास्यात्तर्हिभोक्तृत्व मेवव्याहन्ये-

त्व स्यस्यसाक्षात्स्वभोक्तृत्वानुपपत्तेः किंचशरीरादिक मेवचेत् भोक्तृस्यात्तदाभोक्तु कैवल्याऽर्थं दुःखोत्पत्त्युच्छेदार्थकस्यापि प्रवृत्ति नोपपद्येत शरीरादीनां विनाशित्वात् प्रकृतेश्च धर्मिग्राहक मानेन दुःखादि स्वभावत्वात् कैवल्यानुपपत्तेः किंच ॥

**पुरुषः जडप्रकाशायोगात्प्रकाशः ॥१४५॥**

लोकेजडस्या प्रकाशस्यलोष्ठादेः प्रकाशोत्पत्त्यदर्शनेन सूर्यादिवत्प्रकाशरूप एव पुरुषः स्मर्यतेह्रियथादीपः प्रकाशा त्माऽस्त्वोवा यदि वा महान् ज्ञानात्मानं तथा विद्यात्पुरुषं सर्वजंतुष्विति ननुप्रकाश स्वरूप त्वेपितंजो वद्धर्मि धर्म भावोस्तु तत्राह ॥

**निर्गुणत्वन्नाचिद्धर्मा ॥ १४६ ॥**

चिद्धर्माप्रकाशधर्मा न किंतु प्रकाशएवकुतः निर्गुणत्वात् गुणरहितत्वात् प्रतीयमानास्त्विच्छादयो बुद्धेरेवेति भावः किञ्च पुरुषस्य प्रकाशरूपस्य सम्बन्ध मात्रेण सर्व व्यवहारोप- पत्तौप्रकाशरूप धर्म कल्पनायां गौरवमपि तेजसस्तु प्रकाशा- ख्य रूपविशेषाग्रहेपि स्पर्श पुरस्कारेण ग्रहात् प्रकाशतेजसो भेदः सिद्ध्यति आत्मनस्तु ज्ञानाख्य प्रकाशा ग्रहकालेग्रहणं नास्तीत्यतो धर्मिधर्म भावशून्यं प्रकाशरूपमेवात्मद्रव्यं- कल्प्यते तथास्मृतिः ज्ञानंनैवात्मनो धर्मो न गुणोवा कथंच- न ज्ञानस्वरूपएवात्मानित्यः सर्वगतः शिवइति नत्वहं जाना मीति धर्मिधर्म भावानुभवः कथंतत्राह ॥

+ श्रुत्यासिद्धस्यनापलापस्तत्प्रत्यक्षबाधात् ॥१४७॥

भवेदेवं यदि केवल तर्कं शास्त्राभिर्निर्गुणत्वादचिद्धर्मा प्रसाध्येत न चैवं किन्तु साक्षी चेता केवलो निर्गुणश्च चिन्मात्रो हंसदा शिव इति श्रुति सिद्धंतत् तथाच श्रुति सिद्धस्य नापलाप; संभवति किंतु तत्प्रत्यक्षस्य धर्म्म धर्मि भावविषयक प्रत्यक्षस्य बाधात् निर्गुणत्वादिसुस्थिरमितिशेष; ननु यदि प्रकाश स्वरूपएवात्मात दा सुषुप्त्याद्यवस्थाभेदस्तस्य नस्यात् प्रकाशा नपाया त्तत्राह ॥

+ सुषुप्त्याद्यस्यसाक्षित्वं ॥ १४८ ॥

सुषुप्त्याद्यस्या वस्थात्रयस्य बुद्धिनिष्ठस्य साक्षित्वमेवपुंसि अतएवोक्तं जाग्रत्स्वप्नः सुषुप्तं चगुणतोबुद्धिवृत्तयः तासांविलक्षणोजीवः साक्षित्वेनव्यवस्थितइति तासांबुद्धीनांसाक्षित्वेन विलक्षणो जाग्रदाद्यवस्थारहितो निर्णीतइत्यर्थः लाघवादात्मैक्यमिति केचित्तन्मतं दूषयति ।

+ जन्मादिव्यवस्थातः पुरुषस्यबहुत्वं ॥१४९॥

अपूर्व देहेंद्रियादि संघात संयोगोजन्ममरणंतद्वियोग जन्ममरण सुखदुःखबंधमोक्षव्यवस्थातः श्रुत्युक्तायाहेतोः पुरुषा बहवःपुण्य; पुण्येन पाप; पापेनेति जन्मव्यवस्थाया एतद्विदुर मृतास्तेभवंत्यथेतरे दुःखमेवापियंतीति.बंधमोक्षव्यवस्था ननु पुरुषैक्येपि उपाधिरूपावच्छेदेन जन्मादिव्यवस्थास्यात्तत्राह ।

+ उपाधिभेदेप्येकस्यनानायोग आकाश-

स्येवघटादिभिः ॥ १५० ॥

उपाधिभेदेप्येकस्यपुंसोनानोपाधियोगोस्त्वेव आकाश-स्यघटपटादिभिरिव तथा च कायव्यूहादाविवेकस्यनानोपा-ध्यवच्छेदेनसुखदुःखादियोगःस्यादित्यर्थः अतिरिक्त एवोपा-धिविशिष्टोस्तुतत्राह।

+ उपाधिर्भिद्यतेनतुतद्वान् ॥ १५१ ॥

विशिष्टस्यातिरिक्तत्वे हि विशेषणनाशेन तन्नाश एवस्या-दितिभावः उपसंहरति।

• एवमेकत्वेन परिवर्त्तमानस्यन विरुद्ध-धर्माध्यासः ॥ १५२ ॥

एकत्वेनसर्वतो वर्त्तमानस्य योविरुद्धः सुखदुःखाध्यासस्त-दापत्तिः सैवंसतिपुरुष बहुत्वेसतिनेत्यर्थः; नन्वात्मनोर्निर्ध-र्मकत्वात्सुखादीनां बुद्ध्यादिधर्मत्वाचनसां कर्थमतआह।

• अन्यधर्मत्वे पिनारोपात्सिद्धिरेकत्वात् १५३

बुद्धिधर्मत्वेपि सुखादीना मारोपात्पुरुषेव्यवस्थान संभव-ति आरोपाधिष्टानस्यैकत्वात् नहिस्फटिकैकेत्र आरोपितानां नीलपीता दीनांनीलोयंपोतोयमितिव्यवस्थासंभवति घटा-काशादीनांतु उपाधि भेदेनभिन्नानां औपाधिकधर्मव्यवस्था घटत इतिभावः नन्वेक एवहिभूतात्माभूते भूतेव्यवस्थित एक-धावहुधाचैव दृश्यतेजलचंद्रवदित्या दीनांकागतिस्तत्राह।

• नाद्वैतश्रुति विरोधोजातिपरत्वात् ॥५४॥

नास्मन्मतेप्यैक्य श्रुतिविरोध; कुत; जातिपरत्वात्तासां जाति; सामान्यमेकरूपतेति यावत् जातिपदस्यैकरूपता प्रतिपादकत्वमग्रिम सूत्राल्लभ्यते नत्वेकरूपत्वमपि प्रत्यक्ष विरुद्ध तत्कथ मुक्तं जाति परत्वादितितत्राह ।

+ विदितबंध कारणस्यदृष्ट्यातद्रूपं ॥१५५॥

विदितं स्पष्टवं धकारणविवेकोयत्र तस्य पुरुषस्यदृष्ट्यैव पुरुषेषुतद्रूपं रूपभेदइत्यर्थः तथाप्यनुपलंभादेकरूपताया एवा भावस्तत्राह ।

+ नांधादृष्ट्या चक्षुष्मतामनुपलंभः ॥१५६॥

अनुपलंभ एवासिद्धः अज्ञै रदर्शनेपिज्ञानिभिरेकरूपत्व-दर्शनात् एकात्मवादेवाध कांतरमाह ।

+ वामदेवादि मुंक्तोनाद्वैतं ॥ १५७ ॥

यद्यपिवामदेवादि मुंक्तास्तथापिबंधोनु भूयतेऽतोपिनात्मै-क्यं वामदेवादेः परममोक्षोनजात इतिशंकायामाह ।

•अनादावद्ययावदभावा द्भविष्यदप्येवं॥१५८॥

अनादौकाले अद्ययावच्चेन्मोक्षोनजातः कस्यापितर्हिभ-विष्यत्कालोपि मोक्षशून्यः स्यात् तत्रानुमानमाह ।

• इदानीमिव सर्वत्रनात्यंतोच्छेदः ॥१५९॥

सर्वकालोबंधात्यंतोच्छेदाभाववान् कालत्वाद्वर्त्तमान काल वदितिप्रयोग; पुरुषस्ययदेक रूपत्वंतर्हि मोक्षकाले उत सर्व-देत्याकांक्षायामाह ।

+ व्यावृत्तोभयरूपे ॥ १६० ॥

श्रुतिस्मृतिन्यायेभ्यो व्यावृत्तेनित्यनिवृत्ते उभयरूपेरूपभेदइतियावत् यस्मात्तथा ननुसाक्षित्वस्यानित्यत्वात्कथंसदेकरूपत्वंतत्राह ।

• साक्षात्संबंधात्साक्षित्वं ॥ १६१ ॥

पुरुषस्ययत्साक्षित्वमुक्तं तत्साक्षात्संबंधात् नतुपरिणामतइत्यर्थः; साक्षाद्द्रष्टरिसंज्ञायामिति साक्षिशब्दव्युत्पत्तेः; संबंधश्चप्रतिबिंबएवतुसंयोगमात्रं अतिप्रसंगात् सचस्वबुद्धावेवास्तीति स्वबुद्धेरेवसाक्षी अन्येषांतुद्रष्टेतिबोध्यं अक्षसंबंधात् साक्षित्वमितिपाठे अक्षंबुद्धिः करणत्वसामान्यात् विशेषांतरमाह सूत्राभ्यां ।

• नित्यमुक्तत्वं ॥ १६२ ॥

+ औदासीन्यंचेति ॥ १६३ ॥

सदैवपुरुषस्य दुःखाख्यबंधशून्यत्वं ;दुःखादेर्बुद्धिपरिणामत्वात् औदासीन्यमकर्तृत्वं चेतिनिकामत्वादिकं काम; संकल्पइत्यादिश्रुतेः; इतिपुरुषधर्मसमाप्त्यर्थः; नन्वेवंप्रकृति पुरुषयोरन्योन्यं वैधर्म्येणाविवेके सिद्धे पुरुषस्यकर्तृत्वं बुद्धेर्ज्ञातृत्वंचकथंव्यवह्रियत इत्याशंकायामाह ।

• उपरागात्कर्तृत्वं चित्सान्निध्याच्चित्सान्निध्यात् ॥ १६४ ॥

अत्र यथा योग्यमन्वयः पुरुषस्ययत्कर्तृत्वं तद्बुद्ध्युपरागात् बुद्धेश्चयाचित् सा पुरुषसान्निध्यात् एतदुभयंनवास्तवं यथाऽयसोः परस्परंसंयोगविशेषात् परस्परधर्मव्यवहारश्चौपाधिको यथावाजलसूर्ययोः संयोगात्परस्परधर्मा रोपस्तथैव बुद्धि पुरुषयोरितिभावः अतएवेश्वरकृष्णआह तस्मात्तत्संयोगा दचेतनंचेतना दिवलिंगं गुणकर्तृत्वेच तथा कर्त्तेवभवत्युदासीन इतिवीप्सा अध्यायसमाप्त्यर्था अत्रमामकसंदर्भेनास्ति कापिस्वतंत्रता इतिविज्ञापयितुंवृत्तिसार, इत्यभिधानाता परवाक्यानिलिखतानि तेषामर्थोविभावितः सतासंदर्भशुद्धिस्त्वेवंमेनाफलश्रमः ।

इति श्रीस्वयंप्रकाश तीर्थांघ्रिलब्ध वेदांतिसत्पदेनमहादेवेनोन्नीते सांख्यवृत्तिसारे प्रथमोध्यायः ॥ १ ॥

एवं प्रथमेनाध्यायेन शास्त्रस्यविषयोनि रूपितः तत्रो पुरुषस्यापरिणामित्वोप पादनायतु प्रकृतितः सृष्टिप्रक्रियाभिधास्यते विस्तरेणद्वितीये तत्रैवचप्रकृतिकार्याणां स्वरूपमपिवक्तव्यंतेभ्योपि पुरुषस्यस्फुटंविवेकाय अतएवचविकारं प्रकृतिंचैवपुरुषंचसनातनं योयथावद्विजानाति सविरक्तो विमुच्यते इतिमोक्षधर्मेषुत्रयाणांप्रयत्नोक्तिः तत्रादावचेतनायाः प्रकृतेर्निःप्रजोजनस्रष्टृत्वे मुक्तस्यापिबंध प्रसंग इत्याशंक्य जगत्सृष्टौ प्रयोजनमाह ।

• विमुक्तमोक्षार्थंवा प्रधानस्य ॥ १ ॥

कर्तृत्वमितिपूर्वाध्यायांत्य सूत्रादनुषज्यते स्वभावतो दुःख बंधादिमुक्तस्यपुरुषस्य प्रतिबिंबरूपदुःखमोक्षार्थं अथवास्वार्थंस्वस्यपारमार्थिकदुःख मोक्षार्थं प्रधानस्य जगत्कर्तृत्वमित्यर्थः यद्यपिमोक्ष इवभोगोपिपुरुषे: प्रयोजनं तथापि मुख्यत्वात्मोक्षएवोक्तः ननुमोक्षार्थं चेत्सृष्टिस्तर्हिसकृत्सृष्टेवसर्वेषांमोक्षसंभवेपुन: पुनःसृष्टिर्नस्यात्तत्राह ।

+ विरक्तस्यतत्सिद्धेः ॥ २ ॥

नैकदासृष्टेमोक्षः किंतुबहुशोजन्ममरणव्याध्यादि दुःखेनभृशंसंतप्तस्यततश्च प्रकृतिपुरुषयोर्विवेकख्यात्योत्पन्नपरवैराग्यस्यैवमोक्षोत्पत्तेरित्यर्थः सकृत्सृष्ट्या वैराग्यासिद्धौ हेतुमाह

+ नश्रवणमात्रात्तत्सिद्धिरनादिवासनापटुत्वात् ॥ ३ ॥

श्रवणमपिबहुजन्मकृतपुण्येनभवति तत्रापिश्रवणमात्रान्नवैराग्यसिद्धिः किंतुसाक्षात्कारात् साक्षात्कारश्चनझटिति भवति अनादिमिथ्याज्ञानवासनायाबलत्वात् किंतुयोगनिःपत्यायोगीच विघ्नबाहुल्यमतोबहुजन्मभिरेव वैराग्यं मोक्षश्च कस्यचित्कदाचिदेव भववासनायाबलवत्वात् किंतुयोगनिष्पत्यायोगीच विघ्नबाहुल्यमतो बहुजन्मभिरेववैराग्यं मोक्षश्चकस्यचित्कदाचिदेवभवतीतिभावः सृष्टिप्रवाहे हेत्वंतरमाह ।

+ बहुभृत्यवद्वाप्रत्येकं ॥ ४ ॥

यथा गृहस्थानां बहवोभर्तव्याभवति एवं प्रधानस्यापि असंख्याः पुरुषाविमोचनीया अतः क्रियतांमोक्षेपि अन्येषां-

मोक्षार्थं सृष्टिप्रवाहः पुरुषाणामानंत्यात् अतएव योगसूत्र कृतार्थंप्रतिनष्टमप्यजष्टम् तदन्यसाधारणत्वादिति ननुकथं प्रकृतेरेव स्रष्टृत्वमात्मनआकाशः संभूतइति पुरुषस्यापि स्रष्टृत्वोक्तेस्तत्राह ॥

## + प्रकृतिवास्तवेचपुरुषस्याध्यासिद्धिः ॥५॥

प्रकृतौ वास्तवेस्रष्टृत्वे सिद्धे सति पुरुषस्य स्रष्टृत्वाध्यास सिद्धिः अजामेकामित्यादिश्रुतेः पुंसांकूटस्थचिन्मात्रता बोधकश्रुतेश्चपुरुषस्यस्रष्टृत्व मुपासनार्थमेवश्रुतावुच्यते अतएवकौर्मेशक्तिशक्तिमतोर्भेदं पश्यंतिपरमार्थतः अभेदंचानु पश्यंति परमार्थतः अभेदंचानु पश्यंति योगिनस्तत्वचिंतका इति भेदंअन्योन्याभावं अभेदंत्वविभागरूपं प्रकृत्यादिततोयाम. काः पश्यंतीत्यर्थः तथाच प्रकृति पुरुषयोरुपासनीयाभेदाभिप्रायेणैवश्रुतिर्योजनेतिभावः ननुप्रकृतेरपि वास्तवंस्रष्टृत्वं कुतः सृष्टेः स्वप्नतुल्यत्वस्य तत्रतत्रावगमादित्यतआह ॥

## + कार्य्यतस्तत्सिद्धेः ॥ ६ ॥

अर्थक्रियासमर्थादित्यादिः अर्थक्रियाकारित्वेन कार्याणां वास्तवत्वात् स्रष्टृत्वमपि वास्तवंसिद्ध्यति स्वप्नादितुल्यता श्रुतिस्तु अनित्यत्वपरेतिभावः ननुप्रकृतेः स्वार्थत्वपक्षे मुक्त पुरुषं प्रत्यपिप्रवृत्तिः स्यादतआह ॥

## +चेतनोद्देशान्नियमः कंटकमोक्षवत् ॥ ७ ॥

चेततइतिचेतनः विवेकसाक्षात्कारवानित्यर्थः तस्योद्देशात् तंप्रतीत्यर्थः प्रकृतेर्नियमः प्रवृत्त्यभावः यथाकण्टकस्याभि-

त्वं प्रतिमोक्ष; दुःखप्रयोजकत्वाभाव: प्रकृतेर्हिस्वनिष्ठ दुःख- मोक्षार्थं प्रवृत्तिर्वाच्यासचविवेकि पुरुषसम्बन्धे सति जातएव इदमेवहि प्रकृतेर्दुःख रूपत्वंयद्दुःखात्मक बुद्धिप्रतिबिम्ब रूप दुःखभोगस्य पुरुषनिष्ठस्य प्रयोजकत्वं तच्चविवेकि पुरुषस्य दुः- खभोगाभावेसतिगत मेवेति स्वनिष्ठ प्रयोजनव त्वाभावान्मुक्त पुरुषंप्रतिन प्रवर्त्तते किन्त्व मुक्तपुरुषं प्रत्येवेतिभाव; ननुपुरुष स्यस्वयूत्व मध्यस्त मित्युक्तं तन्नयुक्तं प्रकृतिसंयोगेन ! पुरुषस्य परिणामौचित्यात् दृष्टोहि पृथिव्यादि योगेन काष्ठादेःपृथि- व्यादिसदृश: परिणामस्तत्राह ॥

+ अन्ययोगेपितत्सिद्धिर्नाञ्जस्येनायोदाहवत् ॥ ८ ॥

प्रकृतिर्योगेपि पुरुषस्यआंजस्येना नध्यस्ततयान स्रष्टृत्वस्य सिद्धि: यथाग्निसंयुक्तायसोदग्धृत्वस्य किन्तुस्वसंयुक्त प्रकृति द्वारकमध्यस्तमेवस्रष्टृत्वंस्वसंयुक्ताग्निद्वारकमयसइव दग्धृत्वं दृष्टांतेतूभयो: परिणाम: प्रत्यक्षसिद्धत्वादिष्यते संदिग्धे त्वेकस्यैव परिणामे नोपपत्तावुभयो: परिणाम कल्पना गौरव मिति भाव: स्रष्टे मुख्यं निमित्त कारणमाह ।

रागविरागयोर्योगः सृष्टिः ॥ ९ ॥

रागेसृष्टि: विरागेवैराग्ये योग: स्वरूपेवस्थानं मुक्तिरि- तियावत् तथाचान्वयव्यतिरेकाभ्यांसृष्टौ रागएव कारणं रागवैराग्ये अपिप्रकृत्ति धर्मावेव नपुरुषस्येतिबोध्यं ।

• अथसृष्टिप्रक्रियामहदादिक्रमेणपञ्चभूतानां ॥ १० ॥

सृष्टिरिति पूर्वसूत्रादनुवर्तते क्रमस्तूक्तएव प्रकृतिनिष्ठ

स्रष्टृत्वान्महदादिति स्रष्टृत्वस्य विशेषमाह।

+ आत्मार्थत्वात्सृष्टेर्नैषामात्मार्थ आरंभः ११

एषांमहदादीनां स्रष्टे:स्रष्टृत्वस्यात्मार्थं त्वात्पुरुषमोचार्थं-त्वात् न स्वार्थं आरम्भः स्रष्टृत्वं विनाग्निलेन मोचायोगात् ननुदिक्काली सकलव्यवहार सिद्धौकुतोन गणितौतत्राह।

• दिक्कालावाकाशादिभ्यः ॥ १२ ॥

आदिशब्देनोपाधयोगृह्यन्ते तथाच तदुपाधिभ्य आकाशा-द्दिक्कालावु त्पद्येतेइत्यर्थः यद्यप्युपाधि विशिष्टाकाशएव दिक्काली तथापि विशिष्टस्यातिरेकं विशेषणविशेष्यो भयज-न्यत्वं चाभ्युपेत्यायं जन्यत्व व्यवहार; अथमहदादीन्दर्शयति।

• अध्यवसायोवुद्धिः ॥ १३ ॥

महत्तत्व स्यपर्यायोवुद्धिरिति अध्यवसायश्च निश्चयाख्यःत-स्या साधारणीवृत्तिरित्यर्थः; महत्तत्वस्या परानपि धर्मानाह।

• तत्कार्यंधर्मादि: ॥ १४ ॥

धर्मज्ञान वैराग्यैश्वर्याण्यपि वुद्धरुपादानकामिनाहंका-राद्युपादानकानि वुद्धेरेवनिरतिशय सत्वकार्यत्वात् नत्वेवन्नर पश्वादि गतानां वुद्धरंशा नामधर्म प्रावल्यं कथं तत्राह।

+ महदुपरागाद्विपरीतं ॥ १५ ॥

तदेवमहतत्वं रजस्तमोभ्या सुपरागात् विपरीतंक्षुद्रं अधर्माज्ञान वैराग्यानैश्वर्य धर्मकमपिभवति नत्वेवंधर्मा-द्यवस्थानार्थं वुद्धेरपि नित्यत्वात्कथं कार्यतेतिचेत् अत्राहुर-

भियुक्ताः प्रकृत्यंशरूपे बीजावस्थ महत्तत्त्वेसत्व विशेषिकर्म वासनादीना मवस्थानात् तस्यैवज्ञान कारणावस्थया अंकुर वदुत्पत्त्यंगीकारात् तथाच नित्यानित्यो भयरूपाबुद्धिः तत्रा- पि कारणावस्थ बुद्धौप्रकृति व्यवहारएव नतुबुद्धिव्यवहारो बुद्धिलिङ्गाध्यवसायाद्यभावादिति महतः कार्यमहंकारं लक्षयति ॥

+ अभिमानोहंकारः ॥ १६ ॥

अहंकरो तीत्यहंकारो धर्मोतस्याभिमानो ऽसाधारण वृत्तिः असाधारणता सूचनायैव धर्मधर्मिणोर भेदोक्तिः बुद्ध्यानिश्चितएवार्थे ह्यंकारमंसकारौजायेते अतोवृत्त्योः कार्य कारणभावानुसारेणवृत्तिवृत्तिमतोरपि कार्यंकारणभाव उन्नो- यतइत्यभियुक्ताः अन्तः करणमेकमेव बीजांकुर महावृक्षादि वदवस्थात्रयमात्र भेदात्कार्यं कारणभावमा पद्यते अतएव च वायुमत्स्यपुराणयोः मनोमहान्मति र्ब्रह्मा प्रबुद्धिःख्यातिरीश्वर इतिमनोबुद्ध्योः पर्यायत्वमुक्तमिति अहंकारस्यकार्यमाह ॥

+ एकादशपंचतन्मात्रंतत्कार्यं ॥ १७ ॥

एकादशेंद्रियाणि शब्दादि पञ्चतन्मात्रं चाहं कारस्यकार्यं तत्रापि रूपरागादभूच्चक्षुरित्याद्युक्तेः रागधर्मकं मनएवा दावहंकारादुत्पद्यते इतिशेषः तन्मात्रा दीनां रागकार्यत्वा दित्यभियुक्ताः अत्रापि विशेषमाह ॥

सात्विक मेकादशकं प्रवर्त्तते वैकृतयादहं- कारात् ॥ १८ ॥

एकादशानां पूरणमेकादशं तदेवैकादशकं षोडशात्मकग-णमध्ये सात्विकं अतस्तत् वैकृतात्सात्विकात् अहंकाराज्जाय-तेराजसाद्द शेन्द्रियाणितामसात्पञ्च तन्मात्राणीत्यवगन्तव्यं एकादशेन्द्रियाणिदर्शयति ॥

## + कर्मेन्द्रियबुद्धीन्द्रियैरांतरमेकादशकं ॥१९॥

वाक्पाणिपादपायूपस्था: कर्मेन्द्रियाणि चक्षु: श्रोत्रत्व-ग्रसनघ्राणानिज्ञानेन्द्रियाणिएतै:सह आन्तरं मनइत्येकादश-कं एकादशेन्द्रियाणि इन्द्रियाणां भौतिकत्वं प्रत्याचष्टे ॥

## + आहंकारिकत्वश्रुतेर्न भौतिकानि ॥२०॥

इन्द्रियाणीतिशेष: आहंकारिकत्वश्रुतिश्चकालेनलुप्ता-प्याचार्यवाक्या दस्तीत्यनुमीयते अन्नमयत्वादि श्रुतिस्तु अन्न कृतपटुत्वाद्बोध्या तथाप्यग्निं वागप्येतिवातं प्राणश्चक्षुरा दित्यमित्यादिश्रुतिषुदेवतास्विन्द्रियलयोक्तेर्लयस्यचकारणएवो चित्यादेव तोपादानकत्वंस्या त्तत्राह ॥

## • देवतालयश्रुतिर्नारंभकस्य ॥ २१ ॥

साचश्रुतिर्नारंभक विषयिणी अनारम्भकेपि भूतलेजल-बिन्दोर्लय दर्शनान्मनो नित्यमितिकेचित्तान्प्रत्याह ॥

## • तदुत्पत्तिश्रुतेर्विनाशदर्शनाच्च ॥ २२ ॥

एतस्माज्जायते प्राणोमन: सर्वेन्द्रियाणि चेत्युत्पत्तिश्रुते: वृद्धाद्यवस्थासुचक्षुरादीनामिवमनसोप्यपचयादिना विना-शनिर्णयाच्चमनोनित्य मितिशेष; गोलकमेवेन्द्रियमितिना-स्तिक मतमपाकरोति ॥

÷ अतीन्द्रियमिन्द्रियंभ्रांतानामधिष्ठाने ॥२३॥

सर्वं मिन्द्रिय मतीन्द्रियं भ्रांतानामिवतु अधिष्टा नेगोलके इन्द्रियमितिबुद्धिः क्वचिदधिष्ठानमितिपाठः एकमेवेन्द्रियं शक्तिभेदाद्विलक्षणकार्यं कारीतिमतं प्रत्याह ॥

+ शक्तिभेदेपिभेदसिद्धौनैकत्वं ॥ २४ ॥

एकस्येन्द्रियस्यशक्ति भेदस्वीकारे पीन्द्रियभेदः सिद्धत्येव शक्तीनामपीन्द्रियत्वात् अतोनैकत्वमिन्द्रियस्य नचनानेन्द्रिय कल्पनागुर्वीत्याह ॥

+ नकल्पनाविरोध.प्रमाणदृष्टस्य ॥ २५ ॥

स्पष्टं मनसोविशेषमाह ॥

+ उभयात्मकंचमनः ॥ २६ ॥

मनोऽवधानं विना इन्द्रियाणांस्वव्यापाराक्षमत्वात् मन-एवज्ञानेन्द्रियं कर्मेन्द्रियमितिचोच्यते अन्यत्रमनाअभूवंनाद्रा-क्षमन्यत्रमना अभूवन्ताश्रौषमित्यादिश्रुतेः एकमनः परिणाम रूपेज्ञानेकथं नानात्वमतआह ॥

+ गुणपरिणामभेदान्नानात्वमवस्थावत् ॥२७॥

गुणानांसत्वादीनां परिणामाश्चक्षुरादयः तेषांभेदान्नाना-त्वंनानाविधत्वं ज्ञानेंचाक्षुष्यादि वृत्तिप्रयुक्तं चाक्षुषत्वादिक-मादायमनः परिणाम भूतएवज्ञाने चाक्षुषं श्रौतमित्यादिव्य-वहारः यथाएकस्मिन्नेवदेहेतत्तदन्नोपयोगानुपयोगप्रयुक्ताः कृशत्वपुष्टत्वादयो वस्थाइत्यर्थः ज्ञानकर्मेन्द्रिययो र्विषयमाह

* रूपादिरसमलांतउभयोः ॥ २८ ॥

अन्नरसानामलः पुरीषादिः तथाचरूपरसगन्धस्पर्शशब्दाः वक्तव्यादातव्यगन्तव्यानंदपितव्योत्स्रष्टव्याश्च क्रमेणोभयो विषयाः आनन्दपितव्यं चोपस्थस्योपस्थांतरमिति केचित् इन्द्रियाणिकस्योपकारकाणीत्यपेक्षायामाह ॥

+द्रष्टृत्वादिरात्मनः करणत्वमिन्द्रियाणां २९

द्रष्टृत्वादि पंचकंवक्तृत्वादि पंचकं संकल्पयितृत्वंचात्मनः पुरुषस्यदर्शनादिवृत्तौ करणत्वन्त्विन्द्रियाणामित्यर्थः इदानी मन्तः करणत्रयस्यासाधारण वृत्तीराह

* त्रयाणांस्वालक्षण्यं ॥ ३० ॥

स्वं लक्षणमेव लक्षणमसाधारणी वृत्तिर्येषांतेषांभावः स्वा-लक्षण्यं मध्यम पदलोपो समासः तथाचाध्यवसायोबुद्धेः अ-भिमानोहंकारस्य संकल्पाद्यामनसो साधारण वृत्तय इति भावः त्रयस्य साधारणीं वृत्तिमाह

+सामान्यकरणवृत्तिः प्राणाद्यावायवःपंच ३१

प्राणादिरूपाः पंचवायुवत्संचाराद्वायव इतिप्रसिद्धास्ते-सामान्यासाधारणी करणस्यांतः करणत्रयस्यवृत्तिः परिणाम भेदाइत्यर्थः किंचवैशेषिकाणामिवास्माकं नायं नियमोय-दिन्द्रियवृत्तिः क्रमेणैव भवतिनैकदेत्याह

* क्रमशोऽक्रमशश्चेन्द्रियवृत्तिः ॥ ३२ ॥

जातिसांकर्यस्याप्याकंसतेऽदोष त्वात्सामग्रीसमवधानेस-

त्वनेकैरपीन्द्रियैरेकदैकवृत्त्युत्पादने बाधकं नास्तीतिभाव: बुद्धिवृत्तीनामेवसंसार निदानता प्रतिपादनार्थं मादौसंकल्प्यबुद्धिवृत्तीर्दर्शयति ॥

+ वृत्तय:पंचतय्य:क्लिष्टाक्लिष्टा: ॥ ३३ ॥

क्लिष्टाअक्लिष्टावा भवन्तु वृत्तय: परन्तु पञ्चतय्य; पञ्चप्रकाराएवनाधिका: क्लिष्टादु:खदा: सांसारिकवृत्तय: अक्लिष्टास्तद्विपरीतायोग कालोद्भवा: वृत्तीनांपञ्च प्रकारत्वं पातंजले उक्तं प्रमाणविपर्ययविकल्पनिद्रास्मृतयइति उक्तवृत्तिनिवृत्यापिपुरुषस्वरूपं परिज्ञापयति ॥

+ तन्निवृत्तावुपशांतोपराग:स्वस्थ: ॥ ३४ ॥

तासांवृत्तीनां विरामदशायां शान्ततत्प्रतिविम्बक: स्वस्थो भवतिकैवल्य इवान्यदापीत्यर्थ:तथाचयोगसूत्राणि योगश्चित्त वृत्तिनिरोध: तदाद्रष्टु: स्वरूपेवस्थानं वृत्तिसारूप्यमितरत्रेति एतदेवदृष्टांतेनाह ॥

+ कुसुमवच्चमणि: ॥ ३५ ॥

यथाजयाकुसुमे सतिमणिरस्वस्थोभवति तन्निवृतौचरागशून्य: स्वस्थोभवतितद्वत् उक्तं यथासंलक्ष्यतेरक्त: केवल: स्फटिकोजनै: रञ्जकाद्युपधानेन तद्वत्परम पुरुषइति ननुकस्ययत्नेन करणानि प्रवर्त्तंते नपुरुषस्य कूटस्थत्वात्तस्य नेश्वरस्य तस्यानाभ्युपगमात्तत्राह ॥

+ पुरुषार्थंकरणोद्भवोप्यदृष्टोल्लासात् ॥३६॥

प्रधान प्रवृत्तिवत् पुरुषार्थं करणानामुद्भव: प्रवृत्तिरपि-

पुरुषस्यादृष्टाऽभिव्यक्तरेवभवति अदृष्टंचोपाधेरेवेति बोध्यं परार्थं स्वतः प्रवृत्तौदृष्टांतमाह ॥

## धेनुवद्वत्साय ॥ ३७ ॥

यथावत्सार्थंधेनुः लक्षणयाधेनुः पयोऽचेतनमपि स्वयमेवस्रवतिनान्ययत्नमपेक्ष्यते तथैवपुरुषस्यकृतेकरणानिदृश्यते चसुषुप्तात्स्वयमेवबुद्धे रुत्थानमिति ईश्वरकृष्णोप्याहपुरुषार्थं एवहेतुर्न कश्चित्कार्यतेकरणमिति करणानिकियंतीत्या कांक्षायामाह ॥

## +करणंत्रयोदशविधंवाह्यांतरभेदात् ॥३८ ॥

मनोहंकारोबुद्धिरित्यंतः करणत्रयं वाह्यानिचदशेतित्रयोदशकरणानि तत्रापिव्यक्ति भेदेनानंत्यं प्रतिपादयितुं विधमित्युक्तं ननुबुद्धेरन्येषांच समानमेव करणत्वमुतास्तिकश्चिद्विशेषः अस्तीत्याह।

## • इंद्रियेषु साधकतमत्व गुणयोगात्कुठारवत् ॥ ३९ ॥

फलायोगव्यवछिन्नस्यैवकरणत्वात् प्रहारएवछिदां प्रति मुख्यकरणत्वं कुठारेतु प्रकृष्टसाधनत्वं गुणयोगात् अमुख्यंतत् एवंबुद्धावेव पुरुषार्थं प्रतिफला योगव्यवछिन्नत्वात् मुख्यंकरणत्वं अन्येषुतुपुरुषार्थं साधकतमत्वगुणयोगात् अमुख्यंकरणत्वमित्येतयोरध्याहारः अर्थातबुद्धावेवमुख्यंकरणत्वमितिभावः नन्विंद्रियान्वयत्वादहंकारोपि मुख्यंकरणंस्या न्नबुद्धिरेवेत्यत आह।

+द्वयोः प्रधानंमनोलोकवद्भृत्यवर्गेषु ॥४०॥

द्वयोर्बुद्ध्यहंकार योर्मध्ये मनोबुद्धिरेव प्रधानं मुख्यंकरणं पुरुषेऽर्थसमर्पकत्वात् यथा भृत्यवर्गेषुकश्चि देवलोकः प्रधानो भवतिराज्ञोन्ये तु तदुपसर्जन भूताग्रामाध्यक्षादयस्तथा बुद्धे प्रधानत्वेहेतूनाह ।

+ त्रिभि अव्यभिचारात् ॥ ४१ ॥

सर्वकरणव्यापकत्वात् फलाव्यभिचाराद्वा ।

• तथा अशेषसंस्काराधारत्वात् ॥ ४२ ॥

बुद्धिरेवह्यखिल संस्काराणामाधारः नचक्षुरादिः पूर्वदृष्ट श्रुताद्यर्था नामंधवधिरादिभिः स्मरणानुपपत्तेः नाप्यहंकार मनसीतत्वज्ञानेना हंकारमनसोर्लये ऽपिस्मरणदर्शनात् अतो बुद्धिरेवप्रधानं ।

+ स्मृत्यानुमानाच्च ॥ ४३ ॥

स्मृत्याचिंतन रूपयावृत्या प्राधान्यानुमानात् चिंतावृत्ति र्हिध्यानाख्या सर्ववृत्तिभ्यः श्रेष्टातदाश्रयतयापि चिंतापरं-वाच्चीबुद्धिः श्रेष्टेत्यवगम्यते ननुचिंतावृत्तिः पुरुषस्यैवास्तुने-त्याह ।

+ संभवेन्नस्वतः ॥ ४४ ॥

स्वतः स्मृतिर्नसंभवेत्कूटस्थत्वात् ननुबुद्धेरेवप्राधान्येमन सस्तृतीयांतः करणस्य प्राधान्यं पूर्वं कथमुक्तमत आह ।

+ आपेक्षिकोगुणप्रधानभावः क्रियाविशेषात् ॥ ४५ ॥

क्रियाविशेषं प्रतिकारणानामापेक्षिकोगुणप्रधानभावः चक्षुरा दिव्यापारेषुमनः प्रधानंमनोव्यापारे हंकारोहंकार व्यापारेच बुद्धिरित्यर्थः कस्यपुरुषस्येदमेव बुद्ध्यादिकरणं नान्यदिति व्यवस्थामुपपादयति ।

+ तत्कर्मार्जितत्वा त्तदर्थमभि चेष्टालोकवत् ॥ ४६ ॥

यत्पुरुषकर्मार्जितं यत्करणंतदर्थं तस्यप्रवृत्तिः यथालोके यत्पुरुषकर्मणाक्रियादिनाजितो योदासादिस्तस्य तत्पुरुषार्थं प्रवृत्तिः यद्यपि पुरुषस्यकर्मापि नास्तितथापि पुरुषभोग साधन तया पुरुष स्वामि कत्वेन राज्ञोजया दिवत्पुरुषस्य कर्माभ्युपगंतव्य मेवकर्मणस्तत्पुरुषीयत्वेकिं नियामकमिति चेत् तथाविधंकर्मांतर मेवानादित्वात्तु नानवस्था दोषायेत्यभियुक्ताः बुद्धेः प्राधान्यमुपसंहरति ।

+ समानकर्मयोगेबुद्धेः प्राधान्यं लोकवल्लोकवत् ॥

सर्वेषांकरणानां सामान्ये पि कर्मजन्यत्वे उक्तप्राधान्य हेतुभिर्बुद्धेरेवप्राधान्यं यथा लोके विवाहादि क्रिया योगसाम्येपिकाचि देवनायिका प्रधानं प्राधांन्य प्रयोजक गुणेर्नान्यास्तद्वत् वीप्साध्याय समाप्तौ ।

+ इतिवेदांतिमहादेवोब्जीलेसांख्यप्रवचन वृत्तिसारेद्वितीयोध्यायः ॥ २ ॥ २११ ॥ + ॥

प्रधानकार्यं निरुपणानंतर वैराग्यार्थं तृतीयाध्यायारंभः

अविशेषाद्विशेषारंभ ॥ १ ॥

अविशेषाद्भूत सूक्ष्मात् विशेषस्य महाभूतस्यारंभः ।

+ तस्माच्छरीरस्य ॥ २ ॥

मांसादिमयस्या रंभइत्यनु षज्यते शरीरारंभेकारणमाह ।

+ तद्बीजात्संसृतिः ॥ ३ ॥

तस्य शरीरस्य वीजात् कर्मणः सूक्ष्मदेहाद्वा संसृतिस्तत्तद्देहावछिन्नसुखदुःखोपभोगादिरुपाः ननु भूतसूक्ष्माणामारंभकत्वे सर्वदावन्ध प्रसंग इत्यतोवधिमाह ।

+ आविवेकाच्चप्रवर्तनमविशेषाणां ॥ ४ ॥

विवेकज्ञान पर्यन्तमारंभकत्वं भूतसूक्ष्माणा मित्यर्थः नन्वविवेकिनं प्रत्यारंभकत्वे महाप्रलयेपितं प्रत्यारंभकत्वं कुतो नेत्यत्राह ।

+ उपभोगादितरस्य ॥ ५ ॥

इतरस्या विवेकिन उपभोगात् उपभोगसमाप्तेः पूर्वस्य भोगप्रदकर्मणो नाशेप्रलय इति भोगा भावेकिमर्थं शरीरमितिभावः सृष्टौपुनरारंभ कत्वं कथं तत्राह ।

+ संप्रतिपरिमुक्तोद्धाभ्यां ॥ ६ ॥

संप्रतिरदृष्टि कालेद्वाभ्यां धर्माधर्माभ्यां परिमुक्तोवद्ध इत्यर्थः आङ्पूर्वस्येव परिपूर्वस्यापि मुचेर्बन्धनार्थत्वात् प्रलये-सुप्तयोः धर्माधर्मयोः सृष्टिकाले फलोन्मुखयोः सतोः शरीरमारभ्यतीमुक्तीतु धर्माधर्मयोर्नाश एवेतिभावः स्थूलसूक्ष्म शरीरयोर्वैलक्षण्यमाह ।

+ मातापितृजंस्थूलंप्रायशइतरन्नतथा॥७॥

स्थूलमपिकिंचनमातापितृजं नभवतीति प्रायशइत्युक्तं-नतथा नमातापितृ जंतयोरेव पौर्वापर्यभोग व्यवस्थांचाह ।

+ पूर्वोत्पत्तेस्तत्कार्यत्वंभोगादेकस्यनेत-रस्य ॥ ८ ॥

पूर्वोत्पत्तेः सूक्ष्मशरीरस्य तत्कार्यत्वं स्थूलशरीरस्य भोगादिति पञ्चमीप्रथमार्थे भोगएकस्य सूक्ष्मस्य नेतरस्य स्थूलस्य मृतशरीरे भोगादर्शनादित्यर्थः लिङ्गशरीर स्वरूपमाह ।

+ सप्तदशैकंलिङ्गं ॥ ९ ॥

सप्तदशचएकं चेतिसमाहारद्वंद्वः बुद्ध्यहंकार मनांसिपंच सूक्ष्मभूतानि दशेन्द्रियाणीतिसूक्ष्मं लिङ्गमिति चोच्यते सूक्ष्मदेहस्य सर्वत्रतुल्यत्वात् स्थूलवैसादृश्यं कुतइत्यतआह ।

+ व्यक्तिभेदःकर्मबिशेषात् ॥ १० ॥

व्यक्तयः स्थूलदेहाः भेदोवैलक्षण्यं देहेहमितिवादः कथंतचाह ।

+ तदधिष्ठानाश्रये देहेतद्वादात्तद्वादः॥११॥

तदित्यात्म परामर्शः पूर्वस्मात् पूर्वस्मादहमितिवादात् उत्तरउत्तरीह मितिवादः वादद्वत्वभेदेन देहेहमिति ज्ञानस्य भ्रमत्वमाह आत्मनोदेहातिरिक्तत्वात् देहएवाहं प्रत्यय विषयोस्तु तस्यैवात्मता दितिनिरस्यति।

+ नस्वतंत्र्यात्तहतेच्छायावच्चित्रवच्च॥१२॥

तहतेआत्मसत्वं विनास्वयमेव देहोनाहं प्रतीति विषयः मृतदेहेप्यह मितिप्रत्ययापत्तेः यथा वरकं विनान छाया भित्तिं विनानचित्रमिति सूक्ष्मदेहस्यात्मत्वं दूषयति।

+ मूर्तत्वेपिनसंघातयोगात्तरणिवत् ॥१३॥

मूर्तत्वेपि सक्रियत्वे पिअनेन सूक्ष्मदेहे प्रमाणमुक्तं सूक्ष्म देहोपिनात्मा सङ्घातयोगात्संहतत्वात् संहतत्वस्य परार्थत्व व्याप्यत्वात्तदति रिक्त आत्मेत्यर्थः तरणिः प्रकाशः प्रत्यक्षोपि परार्थः मनुस आत्मत्वं निरस्यति॥

+ अणुपरिमाणंतत्कृतिश्रुतेः ॥ १४ ॥

तत्मनः अणुपरिमाणं अल्पं कृतिश्रुतेः क्रिया श्रवणात् आत्मनश्च व्यापकत्वात् मनसोन्नमयत्व श्रुतेरपि नात्मत्व मित्याह॥

+ तदन्नमयत्वश्रुतेश्च ॥ १५ ॥

अन्नमयंहि सोम्यमन इति श्रुतिः प्रधानस्यैव भूत सूक्ष्माणामपि प्रवृत्तिः पुरुषार्थैं वेत्याह॥

+ पुरुषार्थं संसृतिलिंगानां सूपकारवद्राज्ञः १६

संसृतिः प्रवृत्तिः लिंगानांभूत सूक्ष्माणां।

* पांचभौतिकोदेहः ॥ १७ ॥

+ चातुर्भौतिकमित्येके ॥ १८ ॥

+ एकभौतिकमित्यपरे ॥ १९ ॥

स्पष्टानि नुत्तरयोः शरीरंविशेष्य देहाकारपरिणता नां-भूतानां- चैतन्यंधर्मं इतिनिरस्यति।

* नसांसिद्धि कंचैतन्यंप्रत्येकाहृष्टेः ॥ २० ॥

स्वाभाविकंधर्मभूतं मिलितानांहि तदाभवेत् यदिप्रत्ये-कंकिंचिद्दृश्येत्।

+ प्रपंचमरणाद्यभावश्च ॥ २१ ॥

देहस्यचैतन्येतस्यैवात्मत्वेच प्रपंचस्य धर्माधर्मयोः मरण-स्य देहवियोगरूपस्यादिशब्दा देहांतर संयोगस्यचाभावः प्र-सज्येत् नचेष्टापत्तिः सर्वस्यप्रामाणिकत्वात् यथा प्रत्येकमश-क्ता अपि बहवोमादक् पदार्थमदशक्ति मुद्वहंति तथा भूता-निमिलिता निचेतयंते इत्यतआह।

+ मदशक्तिवच्चेत् प्रत्येकपरि हृष्टेसौक्ष्म्यात्साहृत्येतदुद्भवः ॥ २२ ॥

तत्र प्रत्येक परिहृष्टे सूक्ष्मसामर्थ्ये सतिसांहत्ये समुदाये सतिमदशक्तेः उद्भवआधिकां साचानुमुक्ति साधनमाह।

+ ज्ञानान्मुक्तिः ॥ २३ ॥

बंधहेतुमाह ।

बंधोविपर्ययात् ॥ २४ ॥

विपर्ययात् अज्ञानात् ज्ञानकर्मणोर्व्यवस्थामाह ।

* नियतकारणत्वान्न समुच्चयविकल्पौ ॥२५॥

ज्ञानंमुक्तिहेतुः अतोमुक्तौन ज्ञानकर्मणोः समुच्चयः नवा विकल्पः ननुमास्तुकाम्यकर्मणा समुच्चयोनित्येनतुस्यादतआह ।

÷ स्वप्नजागराभ्यामिवमायिकामायिकाभ्यांनोभयोः मुक्तिः पुरुषस्य ॥ २६ ॥

मायिकंकर्म अमायिकंज्ञानं स्वप्नजागराभ्यामिवभिन्नकालाभ्यांताभ्यांन मुक्तिः नोभयोरेक कालत्वंयेनसमुच्चयः स्यात् नित्यकर्मापिचित्त शुद्धावेवोपयुज्यंते नतुमुक्ताविति कर्मणोमायिकत्वमिथ्यात्वं न किंतु अनात्यंतिकफलत्वमित्याह ।

* इतरस्यापिनात्यंतिकं ॥ २७ ॥

इतरस्यापि कर्मणोपिनात्यंतिकं फलमतो मायिकत्व मुक्तं एतेनज्ञानस्या मायिकत्वं व्याख्यातं योगिनः संकल्प मात्रेण सिद्धे पदार्थेपि न मिथ्यात्व मित्याह ॥

+ संकल्पितेप्येवं ॥ २८ ॥

न मिथ्यात्व मितिबुद्धिस्थं ननु क्लृप्तदृष्ट कारणाभावे जायमानस्य कथंनमिथ्यात्वंतत्राह ॥

* भावनोपचयाच्छुद्धस्य सर्वंप्रकृतिवत् ॥२९॥

शुद्धस्यप्राणायामा दिभिर्योगिनः भावनायाः ध्यानस्योप-चयादाधिक्यादेव सर्वं सम्पद्यते नतत्रदृष्टकारणापेक्षाना-स्मदादिवद्धि तथा संकल्पोयोगीतिभावः प्रकृतिवत् प्रकृति-र्यथाऽनपेक्ष्यैव पूर्वं कारणं महदादिकार्यं करोतितद्वत् ध्यान माह।

+ रागोपहतिर्ध्यानं ॥ ३० ॥

रागस्यरजोगुणस्य उपहतिर्निश्चलत्वमितियावत् तदुपाय माह।

+ वृत्तिनिरोधात्तत्सिद्धिः ॥ ३१ ॥

वृत्तयः प्रमाणादयः तन्निरोधात् ध्यानसिद्धिः वृत्तिनिरो-धोपायमाह।

* धारणासनस्वकर्मणात्तत्सिद्धिः ॥३२॥

धारणानाभ्यादि देशेचित्त धारणं आसन माह।

* स्थिरसुखमासनं ॥३३॥

स्वष्टंवृत्तिनिरोधे उपायांतर माह।

* निरोधच्छर्दिविधारणाभ्यां ॥३४॥

वृत्तीनामित्यादि छर्दिः रेचकंविधारणं कुम्भकः पूरकस्या-प्युपलक्षणं प्राणायामैरित्यर्थः स्वकर्मव्याचष्टे।

+ स्वकर्मस्वाश्रमविहितकर्मानुष्ठानं ॥३५॥

वृत्तिनिरोधे उपायां तरमाह।

* वैराग्यादभ्यासाच्च ॥ ३६ ॥

वैराग्यादलं प्रत्ययात्त दभ्यासाच्च ।

* विपर्ययभेदाः पंच ॥ ३७ ॥

अविद्यामिथ्याज्ञानं अस्मिताचाभिमानः रागोनुरागः द्वेषः क्रोधः अभिनिवेशस्त्रासः।

* अशक्तिरष्टाविंशतिधा ॥ ३८ ॥

+ तुष्टिर्नवधा ॥३९॥

÷ सिद्धिरष्टधा ॥४०॥

चतुर्षुविपर्यय भेदानवांतरानाह ।

÷ अवांतरभेदाः पूर्ववत् ॥४१॥

विपर्ययस्यावान्तर भेदाः पूर्वाचार्य्यैर्यथोक्तास्तथा बोध्याः तथाहि पंचानां विपर्यय भेदानां अविद्यास्मिता रागद्वेषा-भिनिवेशानां तमः मोहः महामोहः तामिस्त्रोंध तामिस्त्र इति क्रमेण नामानि अव्यक्त महदहं कारपञ्च तन्मात्रे ष्व नात्मसु आत्मबुद्धिर विद्यातमः साचाष्ट विध विषयत्वादष्ट विधा शब्दादि पञ्चसुदिव्यादि व्यतया दशविधेषु राग आस-क्तिर्महामोहः स च दश विषयत्वा दष्टादश विधः शब्दाद-यो दशाणिमा दयोष्टौ परस्परेणो प हत्यमानाः कोपनीया-

भवन्तीति तद्विषयो द्वेषस्तामिस्रोऽष्टा दशविधविषयत्वादष्टा-दशविधः देवाश्चणिमादिकमैश्वर्यमासाद्य शब्दादीन् विष-यान् भुञ्जानाः शब्दादयोभोग्याः तदुपायश्चाणिमादयो ऽस्मा-कमसुरैर्जीत्तूपहत्यरन्निति विभ्यतिसोयन्धासोभिनिवेशो म-हातामिस्रः सोप्यष्टादशविध विषयत्वा दष्टादश विध इति संकलनयाद्विषष्टिर्विपर्यय भेदाः अशक्तेर्भेदानाह ॥

## ÷ एवमितरस्याः ॥४२॥

पूर्वाचार्योक्ता एवा शक्तेर्भेदाज्ञेयाः तेचवाधिर्यं कुष्टितां धन्वं जडताजिघ्र जातथा मूकता कौण्यपंगुत्वंक्लैव्योदा वर्तं मुग्धता इत्येका दशेन्द्रियवधाः तुष्टयो नव सिद्धयोष्टौ तद्विपर्ययेण सप्तदश वुधेर्वधाः इत्यष्टा विंशतिधा वुद्धेरशक्ति जडतारसाज्ञानं कौण्यं ग्रहणासामर्थ्यं उदावर्ती विसर्गा सा-मर्थ्यं मुग्धता विषया ग्रहणं तुष्टिभेदानाह।

## ÷ आध्यात्मिकादिभेदान्नवधातुष्टिः ॥४३॥

तुष्टयोद्विधा अध्यात्मिका वाह्याश्च तत्र प्रकृतिव्यतिरि-क्तमात्मानमधि कृत्यप्रवृत्ता आध्यात्मिकाश्च तस्रः प्रकृत्युपादा न कालभाग्यनामानः तत्रप्रकृतितुष्टि र्यथा प्रकृतिव्यतिरिक्ते-आत्मनिज्ञाते विवेक साक्षात्कारोहि प्रकृतिपरिणामस्तं च प्रकृतिरेवकरिष्यतीति तदर्थमलन्तेध्यानाभ्यासेन तस्मा-देवमेवास्स्वेति कस्यचि दुपदेशात् शिष्यस्यतुष्टिः इयमेवांभ इत्युच्यते उपादान तुष्टिर्यथा प्राकृत्यपि विवेकख्यातिर्न प्रकृ-तिमात्राद्भवति माभूत्सर्वस्य सर्वदा प्रकृति मात्रस्य सर्वान्प्रत्य

विशेषात् प्रव्रज्या हेतुकातुसा तस्मात्प्रव्रज्या मुपाददीथाः स्व-
स्ति ध्यानाभ्यासेनेत्यु पदेशात्तु ष्टिः साचसलिल मुच्यते काल
तुष्टिर्यथा प्रव्रज्यापि सद्यो निर्वाणदा न भवति किन्तुकाल
मपेक्ष्येति कालात्ते सिद्धिर्भविष्यत्यलमुत्तप्ततयातवेत्युपदेशा-
त्तुष्टिः ओघउच्यते भाग्यतुष्टि र्यथा काला दपिन सर्वेषां
मुक्तिरपितु भाग्यादेवकस्यचित् अतएवमदालसायत्यानां बा-
ल्येपि मातु रुप देश मात्रादेव विवेकख्यातिलाभेन मुक्तिर
भूत् तस्माद्भाग्य मेवहेतुर्नान्य इत्यु प देशात्तु ष्टि र्वृष्टिरित्यु-
च्यतेवाह्याः पञ्चताह्यिअनात्मनः प्रकृतिमहदहङ्कारादीना-
मात्मत्वभि मन्यमान स्यैव विषयोपरमेसति भवति तथाहि
शब्दादिषु पञ्चस्वपि विषयेषु अर्जन रक्षणक्षय भोग हिंसा
दोष दर्शन जन्मानः पञ्चो परमाभवन्ति तेषुच पञ्चतुष्टयो
भवन्ति स्रक्चन्दन वनिताद्यर्जनेवह्वु दुःख मतुमं दधतो
विषयो परमेतुष्टिरेका अर्जितम विधनादिकं राजादिभ्यो
विनंक्ष्यतोति तद्रक्षणे महद्दुःख मिति भाव मतो विषयो
पर मेतुष्टिर्द्वितीया अल्पायासेनार्जितं रक्षितं च तद्भुञ-
मानेक्षीयत एवेतिक्षयं भावयतो विषयो परमेतुष्टिस्तृतीया-
न जातुकामःकामानामुप भोगेन शाम्यति हविषा कृष्ण
वर्त्मेव भूयएवाभि वर्द्धते इत्युक्तो भोगाभ्या सात्कामा वर्द्धते
तेचविषया प्राप्तौकामिनं दुःखयन्तीति भोगदोषं भावयतो
विषयोपरमेतुष्टि श्चतुर्थीमानु यहत्यभूता न्युपभोगः सम्भव-
तीति हिंसादोष दर्शनाद्विषयो परमेतुष्टि पञ्चमीएताश्च
क्रमेण पारंसुपारं पारपारं अनुत्तमांभः उत्तमांभ इति
चोच्यन्ते इति नव तुष्टयः सिद्धे भेदानाह ।

## ÷ ऊहादिभिः सिद्धिः ॥ ४४ ॥

ऊहादि भेदैरष्टधासिद्धि रित्यर्थः तेचऊहः शब्दोध्ययनन्त्व योविघाताः सुहृत्प्राप्तिर्दानं चेति अथ श्रौतक्रमात्पदार्थ क्रमोवलवानित्यभिप्रेत्यक्रमांतरेणव्याख्यायं ते तत्राद्यासिद्धि रध्ययनं नामविधि वद्गुरु मुखादध्यात्मविद्यानामक्षर स्वरुप ग्रहणंतार मुच्यते द्वितीयासिद्धिः शब्दः शब्दइति तज्जनित मर्थज्ञान सुतार मुच्यते तृतीयाऊहस्तर्कः आगमा विरोधि न्यायेनागमार्थ परीक्षणं यदिदं मनन माहुः सातारतार मुच्यते सुहृत्प्राप्तिश्चतुर्थी न्यायेन परीक्षितमप्यर्थं न तावत् श्रद्दधते यावत् गुरुशिष्यसब्रह्म चारिभिःसह न संवाद्यते तस्मात्सुहृदां गुर्वादीनां प्राप्तिरावश्यकीतिसाचरम्यकमु- च्यते दानंपञ्चमीसिद्धिः दानंच विवेकज्ञानस्य शुद्धिः दैश्शोधन इत्यस्माद्दानपदोत्पत्तेः यदाहपातंजलिः विवेक- ख्यातिरविप्लवाहानोपाय इति अविप्लवः शुद्धिः साचसवा- सनसंशय विपर्यायास परिहारेण विवेकसाक्षात्कारस्य स्वक्क प्रवाहे ऽवस्थानं इयन्तु न विनादरनैरन्तर्यदीर्घका- लस्य नियताभ्यास परिपाकाद्भवतीति दानेन कार्येण सोपि सङ्गृहीतः सेयंसदामुदित मुच्यते इमाश्च पञ्चाऽमुख्याःसिद्ध- यो हेतुत्वात् तिस्रः पुनः फलत्वान्मुख्याः आध्यात्मिक दुःख विघातः आधिभौतिक दुःखविघातः आधिदैविक दुःखवि- घातश्चेति इमाश्च क्रमेण प्रमोद मुदित मोदमान नामानः एवं पञ्च विपर्यय भेदाः अशक्तिरष्टा विंशतिधा तुष्टिनवधासि

द्धिरष्ट धेति पञ्चाशत्पदार्थाः विपर्यया शक्तितुष्टयश्च हेया इत्याह ।

+ नेतरादितरहानेनविना ॥४५॥

इतरासां विपर्यया शक्तितुष्टीनांहानेन विना इतरात् इतरस्मात् अज्ञानात् सिद्धयो न भवन्तीति शेषः आसांसिद्धिपरिपन्थिनीत्वादितिभावः इतरादितिछांदसं इतरेत्यत्र सर्वनाम्नो वृत्तिमात्रे पुं वद्भावः सृष्टि मिदमाह ॥

+ दैवादिप्रभेदाः ॥ ४६ ॥

सृष्टिरितिशेषः आदिशब्दात् तैर्यग्यानः मानुषश्च ब्राह्मः प्राजापत्यऐन्द्रः ऐंद्रो गांधर्वीयाचोराचसः पैशाच इत्यष्ट विधोदैवः पशु मृग पचि सरीसृपस्थावरा इतिपञ्च विधस्तैर्यग्योनः एकविधोमानुषब्राह्मणत्वाद्यवान्तर जातिभेदा विवचया संस्थानस्य चतुर्षुवरोष्वि विशेषादिति समास तोभौतिकः सर्गः प्रकृतेः प्रवृत्ति शीलत्वात्सर्वदासृष्टौ कथंमुक्तिरित्यतआह ॥

+ आब्रह्मस्तंवपर्यंततंतत्कृते सृष्टिराविवेकात् ॥ ४७ ॥

विवेक ज्ञानपर्यंत मेव प्रकृतिः प्रवर्त्तते स्वभावात् कुत्र कथंसृष्टिरित्याह ॥

+ ऊर्ध्वंसंत्वविशाला ॥ ४८ ॥

+ तमोविशालामूलतः ॥ ४९ ॥

+ मध्येरजोविशाला ॥ ५० ॥

भुवः प्रभृति सत्यांता सत्व मूला वहुला मूलतः सृष्टिः पश्वादिस्था वरांतभो वहुला किन्तु मध्ये रजो वहुला धर्मा धर्मा नुष्ठान परत्वा दुःख वहुत्वाच्च एकस्याः प्रकृतेः सृष्टि वैचित्र्यं कथं तदाह ॥

— कर्मवैचित्र्यात्प्रधान चेष्टागर्भदासवत् ॥५१॥

गर्भदासो यथा विचित्रं कर्मकुरुते प्रभोरर्थेतद्वत् ननुकर्म वैचित्र्याद्युत्तरो भूमिलाभेकिंमोक्षेणेत्यतआह ।

— आवृत्तिस्तत्राप्युत्तरोत्तरयोर्नियोगा - द्धेयः ॥ ५२ ॥

उत्तरोत्तरविशिष्ट जन्मलाभेपिआवृत्तिर्यतोतः संसारोहेयः

— सर्वत्र जरामरणादिजंदुःखं ॥ ५३ ॥

सृष्टं प्रकृतिलयात्कृतकृत्य तांनिरस्यति ।

—नकारण लयात्कृत्य तामग्नवदुत्थानात् ॥५४॥

पूर्णंशतसहस्रं तु तिष्ठंत्यव्यक्त चिंतकाइत्युक्तेः कारण-लीनस्यमग्नवत्पुनरुत्थानप्रतोतेः निर्गुणंपुरुषंप्राप्यकालसंख्या नविद्यते इत्युक्तेस्तुनमुक्तौ पुनरावृतिः ननुप्रकृतिपुरुषयोर्नि-त्यत्वाविशेषेकुतः प्रकृतेरेवस्रष्टत्वंतचाह ।

— अकार्यत्वेपितद्योगः पारवश्यात् ॥५५॥

अकार्यत्वेपि नित्यत्वेपितद्योगः स्रष्टत्वयोगः पारवश्यात्

परार्थत्वात् प्रकृतेरचेतनाया अधिष्टाताचेतनः कश्चिदस्तिस चसर्ववित् सर्वकर्त्तेतिमतं दूषयति ।

— सहिसर्ववित्सर्वकर्त्ता ॥ ५६ ॥

सहीति प्रकृति पदार्थएवेत्यर्थः प्रकृतेः परिणामित्वे नज्ञान वृत्तिरूपपरिणाम भवादितिभावः ईश्वरकारणत्वप्रतिपादक श्रुत्यादीनामप्ययमेवार्थ इत्याह ।

— ईदृशेश्वरसिद्धिः सिद्धा ॥ ५७ ॥

सिद्धिर्ज्ञानसिद्धाप्रमाणजन्या प्रधानकिमर्थं प्रवर्त्ततेतत्राह

— प्रधानसृष्टिः परार्थंस्वतोप्यभोक्तृत्वादुष्ट्र कुंकुमवहनवत् ॥ ५८ ॥

परार्थंअपिरेवार्थस्वतः अभोक्तृत्वादेवेत्यर्थः उष्ट्रकुंकुमवहनवदिति दृष्टांतेनचेतनस्येव परार्थप्रवृतिमाशंक्याह ।

— अचेतनत्वेपिक्षीरवच्चेष्टितं प्रधानस्य॥५९॥

यथा क्षीरंवत्सविवृद्ध्यर्थं प्रवर्तते दृष्टांतांतरमाह ।

— कर्मबद्धृष्टेर्वाकालादेः ॥ ६० ॥

क्रियतेउप्यते इतिकर्मकृषी बलेनोप्यमानं बीजादिदृष्टिमपेक्ष्यकालादिंवाअपेक्ष्यवृद्ध्यादिरूपेणपरिणमते तथाप्रधानमपि उष्ट्रस्यताडनभियापिकुंकुमवहनं घटते प्रकृतेरचेतनत्वेनतुनस्वार्थानु संधानमित्यतआह ।

—स्वभावाच्चेष्टित मनभिसंधानाद्भृत्यवत्॥६१॥

गर्भदासोहिस्वभावा देवस्वामिकार्यंकरोतिनस्वार्थं मनु-संधायेतिप्रसिद्धं ।

÷ कर्माकृष्टेर्वानादित ॥ ६२ ॥

अनादित्वात्संसारस्य धर्माधर्मोयोद्दलितं प्रधानंप्रवर्तत-इत्यर्थः अतस्तत्वोपिपथ्यं वदितव्यमित्याशयेनाह ।

— विविक्तबोधात्सृष्टिनिवृत्तिः प्रधानस्य सूदवत्पाके ॥ ६३ ॥

यथासूपकारः पाकंकृत्वानिवर्तते सत्यपिविवेकज्ञानेकु-तोनमुक्तिरित्याशंक्याह । –

÷ इतरइतरवत्तद्दोषात् ॥ ६४ ॥

इतरः केवलविवेकज्ञानवानपि इतरवत् विवेक ज्ञानरहि-तवत् तस्यविवेकज्ञानस्यदोषात् संशयविपर्यासरूपात् तथा च विवेकज्ञानस्यशुद्धयर्थं तत्वाभ्यासेयतनोयमितिभावः मो-क्षस्वरूपाह ।

+ द्वयोरेकतरस्य वौदासीन्यमपवर्गः ॥६५॥

विवेकिनप्रत्यप्रवृत्तिः प्रकृतेरौदासीन्यं प्रकृत्यनभिष्वंगः पुरुषस्यएकतरस्यात्मनः मुख्यत्वात्तस्याप्रकृतेरौदासीन्ये सर्वमु-क्तिः स्यादतआह ।

अन्यसृष्ट्युपरागे ऽपिनविरमते अप्रबुद्धरज्जु तत्वस्यैवोरगः ॥ ६६ ॥

उपरागकरणंज्ञानि नंप्रत्योदासीन्येपि अज्ञानिनः प्रति प्रवर्ततेदृष्टांतः स्पष्टः।

+ कर्मनिमित्तयोगाच्च ॥ ६७ ॥

सृष्टौह्रिकर्मायिनिमित्त मित्युक्तं तच्चाज्ञानिनोस्तिज्ञा-निनोनास्तिच्चीयंतेचास्यकर्माणीतिश्रुतेः अदृष्टस्याकारणत्वे-प्याह।

नैरपेक्ष्येपिप्रकृत्युपकारेऽविवेकोनिमित्तं६८॥

अदृष्टनैरपेक्ष्येपिअविवेकः प्रकृतिप्रवृत्तावपेक्षितः प्रकृते निंवृत्तिं दृष्टांतेनाह।

* नर्तकीवत्प्रवृत्तस्यापि निवृत्तिश्चारिता-र्थ्यात् ॥ ६९ ॥

नर्तकी यथासभ्यान् प्रत्यात्मानंप्रदर्श्य नृत्यान्निवर्त्तते त-थाप्रधानमपिनर्तकीवत्पुनः कदाचिन्नप्रवर्तिष्यतेनेत्याह।

÷ दोषबोधेपिनोपसर्पणं प्रधानस्यकुल-वधुवत् ॥ ७० ॥

विवेकज्ञानात् स्वदोषबोधेसति उपसर्पणंनैवेत्यर्थः कुल वधुर्यथा परपुरुषेण दृष्टाहमिति जानानानोपसर्पतितं बंध मोक्षौ च पुरुषस्याविवेकादेवनतुस्वाभाविका वित्याह।

नैकांततोबंधमोक्षौ पुरुषस्याविवेकादृते ७१

एकांततः स्वाभाविकौ प्रकृतौस्वापुरुषस्या विवेकादेव स्वाभाविकावित्याह।

* प्रकृतेरांजस्यात्संसर्गत्वात्पशुवत् ॥७२॥

आंजस्यात्तत्वतः ससर्गत्वाद्गुणयोगात् तत्स्यात्प्रकृतिगतयोरपिबंध मोक्षयोर्विवेकाग्रहात् पुरुषसंबंध इतिभावः प्रकृतिः कियद्भीरूपैरात्मानंबघ्नातितदाह ।

\+ रूपः सप्तभिरात्मानवध्नाति प्रधानंकोशकारवद्विमोचयत्येकेन रूपेण ॥ ७३ ॥

सप्तभिर्धर्मवैराग्यैश्वर्या ज्ञानाधर्मावैराग्यानैश्वर्यैः एकेनज्ञानेन ननु विवेकख्यात्यर्थं निरंतरंध्या नानुष्ठाने मुक्तिहेतुभूतकर्मात्यागात् मुक्तिर्नस्यादित्यतआह ।

\+ निमित्तत्वम विवेकस्यनदृष्टहानिः ॥७४॥

संसारस्यकारणम विवेकस्तन्निवृत्तये विवेकख्यातावेवयतनीयंतेनन दृष्टफलमुक्तिहानिर्भविष्यति कर्मणस्तुचित्त शुद्धिद्वारामुक्तिः फलंइतित दृष्टमित्युच्यतेविवेकः कथंस्यात्तत्राह ।

\+ तत्वाभ्यासान्नेतिनेतीतित्यागाद्विवेकसिद्धिः ॥ ७५ ॥

नेतिनेतीति तत्वाभ्यासादेहें द्रियादिवैलक्षण्येनात्मनः पुनःपुनश्चिंतनात्यागात्संन्यासात् च विवेकसिद्धिः विवेकसाक्षात्कारः तथाचश्रुतिः अथातआदेशोनेतिनेतीति त्यागेनैकेअमृतत्वमानशुरितिच ।

\+ अधिकारप्रभेदान्ननियमः ॥ ७६ ॥

ननुअभ्यासेन चेद्विवेकसिद्धि द्वारामोक्षस्तर्हि सर्वेषांशि-
ष्याणांस्यादेकदाभ्या साविशेषादतआह।

+बाधितानुवृत्या मध्यविवेकतोप्युपभोगः७७

मध्यत्वंनाम विदेहमुक्तिप्रतिबंधकप्रारब्धशेषवत्वंतद्वतो-
विवेकात् उपभोगोपोत्यन्वयः रागद्वेषाभावात् बाधितस्यद्वे-
षं विषादयोर प्रयोजकस्यकामानुत्पादकस्यापि अनुवृत्याप्रा-
रब्धकर्मफलत्वेना वश्यकतया तथा च विवेकविवेकितोरूप
भोगेमहान्भेद इतिभावः मध्यविवेकिनः स्वरूपमाह।

+ जीवन्मुक्तः ॥ ७८ ॥

जीवन्नपिमुक्त इवजीवन्मुक्तो प्रमाणमाह।

+ उपदेशोपदेष्टत्वात्तत्सिद्धिः ॥ ७९ ॥

जीवन्मुक्तस्य रागाद्यभावान्नो पदेष्टत्वसंभवः मंदवि-
वेकीतूपदेश्यः तथाच तदुपदेष्टत्वाज्जीवन्मुक्तिसिद्धिः अत्रप्र-
माणंदर्शयति।

+ श्रुतिश्च ॥ ८० ॥

समित्पाणिः श्रोत्रियंब्रह्मनिष्ठमिति तस्मैसविद्वानुप स-
न्नायसम्यक इतिश्रुतिः विदुषउपदेष्टत्व वादिनोप्यस्तिविपक्षे
बाधमाह।

+ इतरथांधपरंपरा ॥ ८१ ॥

अज्ञानिनाकथमज्ञानीउपदेश्य ज्ञानिनः शरीरकथंति
ष्ठतीत्याह।

+ चक्रभ्रमणवद्धृतशरीरः ॥ ८२ ॥

यथादंडेनभ्राम्यमाणचक्रं निवृतेपिदंडेभ्राम्यत्येव एवं विवेकिनंप्रतिप्रकृते र्निवृत्तान्नपि पूर्वव्यापारेण जातंशरीरंतिष्ठतीत्यर्थः ननुदंडक्रियायाअभावेपितत्संस्काराद्भ्रमणमस्तु-रागाद्यभावे उपभोगस्तु कथंस्यादतआह।

+ संस्कारलेशतस्तत्सिद्धिः ॥ ८३ ॥

संस्कारोरागादीनां सएवलेशोरागाद्याभास इत्यर्थः ततस्तत्सिद्धिः उपभोगसिद्धिः अतएवविवेकिनां रागादिदर्शने-पिनतद्रागादिकिंतुरागाद्याभासएवेतिभावः विदेहस्तु क्तिमाह

+ विवेकान्निः शेषदुःखनिवृत्तौ कृतकृत्यो-नेतरान्नेतरात् ॥ ८४ ॥

उपभोगेनप्रारब्धसमाप्तौप्रोक्तत्रिविधदुःखस्यात्यंत निवृतौ-कृतकृत्योमुक्तोभवति कर्मणोमुक्तिहेतुत्वाभावमुपत्त इति इतरस्मात्कर्मणः इतरादितितुसंज्ञापूर्वकोविधिरनित्यइतिवा छांदसत्वंवास्वीकृत्यसंगमनीयंवियाध्यायसमाप्त्यर्थं।

÷ इतिवेदांतिमहादेव कृतसांख्यवृतिसारे तृतीयोध्यायः ॥ ३ ॥ २९५

वैराग्यानंतरंशिष्यप्रवोधायाख्यायिकाप्रायश्चतुर्थोध्यायः

राजपुत्रवत्तत्वोपदेशात् ॥ १ ॥

राजसूनोः स्मृतिप्राप्तौव्याध्यभावोनिवर्तते यथैवमात्म-

नोन्नस्य मुक्तरीत्यागुरुणातत्वोपदेशादवश्यंकृतकृत्यताभवति उ
क्तं चगारुडे गृहाविष्टोद्विजःकश्चिच्छूद्रोहमितिमन्यते गृहना-
शात्पुनः स्वीयंब्राह्मण्यंमन्यतेयथामायाविष्टातथाजीवोदेहो-
हमितिमन्यते मायानाशात्पुनः स्वीयंरूपंब्रह्मास्मिमन्यते
इति प्रसंगेनाप्यात्मज्ञानान्मुक्तिरित्याह ।

## पिशाचवदन्यार्थोपदेशेपि २ ॥

केनचिद्गुरुणाविजनेशिष्यउपदिश्यमाने तर्हितेनकेचित्
पिशाचनतदुपदेशः श्रुतः मुक्तश्चसोभूदित्याख्यायतेएवमन्यो-
प्यन्यार्थोपदेशान्मुच्यते अत्रैवकंचनविशेषमाह ।

## आवृत्तिरसकृदुपदेशात् ॥ ३ ॥

तीव्रवैराग्यैः सकृदुपदेशश्रवणादेवमोचोलभ्यते मंदैस्तुअ-
सकृदुपदेशादावृतिर्बोध्याः वृत्तिरादरणीया नचोपदेशार्थंगुरु-
रावश्यक इत्याह ।

## + पितापुत्रवदुभयोर्दृष्टत्वात् ॥ ४ ॥

उभयोः गुरु शिष्ययोः दृष्टत्वात् दृष्टार्थत्वात् नात्रज्ञानेगुरु
नियमः किन्तु अभ्रान्ताना मेवोपदेशः कार्यः अधिकारिणा
फलमाप्तव्यमिति तत्रदृष्टान्तः पितापुत्रवदिति कश्चि द्दरि
द्रोब्राह्मणः आत्मनो भार्यां गुर्विणी पितृ गृहेस्थापयित्वा
देशान्तरङ्गतो वहुनाकालेन समागतः स्वपुत्रं दृष्ट्वापिस्व
पुत्रोयमितिन ज्ञातवान् पुत्रोपि पितरं दृष्ट्वाममपितायमि-
तिन ज्ञातवान् ततोमात्रा भर्त्ता पुत्रश्चो पदिष्टः अयन्ते पुत्रो

यन्तेपि तेतिक्रमेणततस्तौ सुचिनावभूतामित्याख्यायिका-सांसारिक सुखंदुःख मिश्रितत्वाद्धेय मित्याह ॥

+ श्येनवत्सुखदुःखीत्यागवियोगाभ्यां॥५॥

सर्वोपिजनः सुखवान् दुःखवांश्च दुःख मिश्रित सुखवानित्यर्थः त्यागवियोगाभ्यां श्येनवत् केनचिन्मृगयां गत्वासंप्राप्तः श्येनशावकः पोषितस्वान्नपानाभ्यां कालेयौवनमाप्तवान् अथैनं बन्धेन दुःखिनं कुतो हंकरोमीति चिन्तयतातेबध्येनोवनेत्यक्तः सयथा बन्धन त्यागात्सुखी पोषकपुरुष वियोगाच्च दुःखी तथा सर्वोपि वैषयिक सुखीदुःखवानेवेत्यर्थः ममत्वञ्चेहादि रनर्थावह इत्याह ।

+ अहिर्निर्ल्वयनीवत् ॥ ६ ॥

अहिनिर्ल्वयनी सर्पनिर्मोकः तस्यामिव यथा सर्पः निर्मोकं विवरद्वारित्यक्तापिस्नेहात्तत्र ममत्वं नत्यजति किन्तुतं धूलीपंकाक्तं दृष्ट्वाशोचति अथ च तदनु सारादेवकेन चिदाहितुण्डिकेन गृहीतोवद्ध न ७ भाजनं भवति तथा विषयेष्वाश्लिष्यन् जन्तुरित्यर्थः अकार्यं सर्वथा न कार्यं प्रमादकृते च तस्मिन वस्त्रं विकृतिः कार्येत्याह ।

+ छिन्नहस्तवद्वा ॥ ७ ॥

एवमाख्यायते जहारफल पुष्पादि प्रविश्यभ्रातु राश्रमं मुनिः कश्चित्ततो भ्राचास्तेपीत्युक्त उवाचतं प्रायश्चित्तं वदायाह प्रायश्चित्तं करछिदांनि वेद्यराज्ञेतेना शुक्ल करोछिदिता वति ॥

+ असाधनानुचिन्तनंबंधायभरतवत् ॥८॥

भरत:किलहरिण शावकं पुपोषतं विहायनान्यमनाव भूव सच मरण समयेपि तन्मनाएवममार तेन मुक्तिं ना यि प्रत्युतजन्मलब्ध वानितिपुराणेषुस्पष्टं बहुभिर्मेलनंनकुर्या- दित्याह ॥

+ बहुभिर्योगे विरोधोरागादिभिः कुमा- रीशङ्खवत् ॥ ९ ॥

यथाकुमारी शङ्खवलयानां परस्पर संघर्षात् रणत्कारः तथा बहूनां मेलने रागादिभिः परस्परं कलहोवश्यं भवेदि- ति बहु मेलनं न कुर्यात् ॥

+ द्वाभ्यामपितथैव ॥ १० ॥

संकथनादि दोषस्तत्रापि सम्भवादितिभावः ॥

+ निराशःसुखीपिङ्गलावत् ॥ ११ ॥

आशाहि परमं दुःखं निराशा परमं सुखं इति सन्त्यज्य कान्ताशां सुखं सुष्वाप पिङ्ग लेति ।

+ अनारंभेपिपरगृहेसुखीसर्पवत् ॥ १२ ॥

गृहारम्भो मनुष्याणां न सुखायकदाचन सर्पः परकृतं बिलमप्रविश्य सुख मेधत इति ॥

+ बहुशास्त्र गुरूपासनेपि सारादानं षट्- पद वत् ॥ १३ ॥

सर्वतः सारमादद्यात् द्रव्येभ्य इवकांचनमिति न्यायेन शास्त्रेभ्योपि सारमेव ग्राह्यं न तु परविजयाया भिनिवेष्ट-व्यं किञ्च गुरुनिष्ठं प्रमादेरवादरणीयं न तु कादाचित्कं रागद्वेषा दीत्यर्थः अतएवोक्तं मार्कण्डेये इदंज्ञेय मिदंज्ञेय मितियस्तृषितश्चरेत् सतुकल्पसहस्रेषु नैवज्ञानमवाप्नुया दिति एकाग्रता दरणीत्याह ॥

+ इषुकारवन्नैकचित्तस्यसमाधिहानिः॥१४॥

इषु कारोहीषुगतमनाराजानं ससैन्यं स्व समीप मार्गेणागच्छंतं न जानाति तद्वदेकचित्तस्यन समाधिहानि रन्यस्यतु सावश्य भवतीति चित्तैकाग्रता तत्व ज्ञानाया दरणीया ॥

+ कृतनियमलंघनादानर्थक्यंलोकवत् ॥१५॥

कृतानामङ्गी कृतानां नियमानां शौचादीनां लंघनाद-नुष्ठाना दानर्थक्यं नैष्फल्यं तत्वज्ञान सामग्र्या इति विशेषः शौचाद्यनुष्ठानं तत्वज्ञान साधने न तत्व ज्ञाने जननीये सह-कारीतिभावः लोकवत् लोके यथा कृतानां नियमानां सम-यानां लङ्घने राज्यादिसुख कारणमपि निष्फलं भवति समय लङ्घने प्रजोद्वेगी न राज्यमपि सुखदं न भवति तद्वत् तत्व ज्ञान विस्मरणे दुःखं भवतीत्याह ।

+ तद्विस्मरणेपिभेकीवत् ॥ १६ ॥

तदितिबुद्धिस्थत्वात्तत्वज्ञान परामृश्यते यथाकश्चिद्राजा मृगयांगतः सुन्दरींकन्यां अद्राक्षीत् दृष्ट्वाच तस्यां साभिला-

षो भूत्वापप्रच्छकासित्वमिति साचराज दुहिताह मित्याह राजामांभजस्वेत्याह तया च जलं मे न दर्शयि तव्यमिति समय पूर्वकं राजापतित्वे नोङ्गीकृतः एवंगते काले क्रीड-यायासितासती कदाचिद्राजानमाह कुत्रजल मिति राजातु समय विस्मरणाज्जलं प्रदर्शया मास साच जलस्पर्शाद्भेकी भूत्वाजलं प्रविष्टा राजातु तद्विरहात् दुःखमवापेत्याख्यायते नोपदेश श्रवणमात्रेण कृतकृत्यता ऽपितु गुरुनिकटेस्थित्वा मननादि कुर्वंतएवेत्याह ।

+ नोपदेशेपि कृतकृत्यता परामर्शा हृते विरोचनवत् ॥ १७ ॥

परामर्शो मननादि विरोचनोहि उपदेशं श्रुत्वैवगृहं गतोनमननादि कृतवान् ।

+ अतोनामुच्यतादृष्टस्तयोरिन्द्रस्य ॥१८॥

तयोरिन्द्र विरोचनयोर्मध्ये इन्द्रस्यदृष्टः कृत कृत्यभाव इतिशेषः कथमिन्द्रस्य कृतकृत्य भावस्तत्राह ।

+ प्रणतिब्रह्मचर्योप सर्पणानिकृत्वासिद्धि-र्बहुकालात्तद्वत् ॥ १९ ॥

उपसर्पणं समीपे वस्थानं तद्वत् अन्यस्यापीतिशेषः ।

+ नकालनियमोवामदेववत् ॥ २० ॥

साधनेन कालनियमः एतज्जन्मनि जन्मान्तरेवेति गर्भस्थ एवहिवामदेवोजन्मान्तरानुष्ठतसाधनात् ज्ञानमवापेति श्रु-

यते ननुदृष्टे ध्यानंस्यान्नचात्मा केनापिदृष्टः दृष्टश्चेत् किम्ध्यानेन तत्राह।

+ अध्यस्तरूपोपासनात्पारंपर्येण यज्ञोपासकानामिव ॥ २१ ॥

यज्ञानुष्ठायिनां अदृष्टधर्मलाभवत् पारम्पर्येण गुरुपरम्परया अध्यस्तस्योपदिष्टस्य रूपस्यस्वरूपस्योपासनात् आत्मतत्वदर्शनं इतिशेषः ध्यानेदर्शनं नापेक्ष्यते ऽपितुज्ञानं तच्च गुरुपरंपरयासुलभमेवेतिभावः ननु मुक्तिजनंकतत्वज्ञानेनालं ब्रह्मलोकलाभेनापि कृतकृत्यत्वात्तत्राह।

+ इतरलाभेप्यावृत्तिः पंचाग्नियोगतोजन्मश्रुतेः ॥ २२ ॥

पंचाग्नियोगतः पंचाग्न्युपासनात् इतरलाभेपि ब्रह्मलोकलाभेपि आवृत्तिः कुतः जन्मश्रुतेः इमंमानवमावर्त्तं नावर्तन्तइति श्रौतो इममितिविशेषणात्मा नवांतरे जन्मप्रतीतेः तत्त्वतत्वज्ञानं विरक्तस्यैवेत्याह।

+ विरक्तस्यहेयहानमुपादेयोपादानंहंसक्षीरवत् ॥ २३ ॥

हेयः संसारः उपदेयोमोक्षः कुतइत्यतआह।

+ लब्धातिशययोगाद्वातद्वत् ॥ २४ ॥

तद्वत हंसवत् हंसस्येव क्षीरनीर विवेचन शक्तिवत् विर-

त्तस्यैव हेयो पादेप विवेचनाति प्रय युक्तिलाभादितिभावः वाशब्द एवार्थे विरक्तस्यैवेत्यादिः ।

+ नकामचारित्वं रागोपहते शुकवत् ॥ २५ ॥

रागोपहतेकामचारित्वमपिन पुनर्मुक्ति रितिशेषः वीतरागेतु मुक्तिः शुकदेववावन्यः कथमित्यत्राह ।

+ गुणयोगाद्बद्धः शुकवत् ॥ २६ ॥

गुणशब्दः श्लिष्टः यथा मधुर भाषणादि गुणयोगात् शुकः पक्षीवध्यते एवं सत्वरजस्तम श्चात्मकगुणयोगात् श्चात्मावध्यत इतिभावः वैराग्यं चन भोगात् श्चपितु दोषदर्शना दित्याह सूत्राभ्यां ।

+ न भोगाद्रागशांतिर्मुनिवत् ॥ २७ ॥

+ दोषदर्शनादुभयो ॥ २८ ॥

सौभरि प्रभृतीनामपि मुनीनां भोगाद्राग शान्तिर्नाभूत् श्चस्मादृशान्तुका वार्त्ताउभयोः श्चात्मनो विषयस्य च सङ्गान्नरक पातगर्भवासादय श्चात्मनो दोषाः परिणतिविरसत्वादयस्तुविषयस्य ।

÷ न मलिनचेतस्युपदेश वीज प्ररो होर जवत् ॥ २९ ॥

उपदेश रूपस्य वीजस्य कारणस्य प्ररोहः फलोन्मुखत्वं श्चजवत् श्चजनाम्निनृपेभार्या शोकार्ते वसिष्टोपदेशो नकार्यंक्षमश्चासीत् श्चतिमलिन चेतसिज्ञानाभासोपि नेत्याह ।

÷ नाभासमात्रमपिमलिनदर्पणवत् ॥३०॥

प्रकृतिजन्यस्यभूत् भौतिककर्त्तृत्वा देरिवतज्जन्यस्य मोक्षस्यापि संसारत्वंस्यात्तत्राह ।

÷ नतज्जन्यस्यापितद्रूपतापंकजवत् ॥३१॥

यथापंकाज्जातस्यापि नपंक रूपता तथा प्रकृति जन्यस्यापिन संसार रूपत्वं दुःखास्पर्शेन विशेषात् ननुदुःखास्पर्शोऽणिमादि सिद्धिलाभेस्तीत्यत्राह ।

÷ न भूतयोगेपि कृतकृत्यता पास्यसिद्धि वदुपास्यसिद्धिवत् ॥ ३२ ॥

आवृत्ति सत्वादिति भावः उपास्येन राजादिना यासिद्धिर्विशिष्टाधिकारलाभादिस्तस्यामिव साह्यिचयिष्णुत्वान कृतकृत्यता वहेति वीप्साध्याय समाप्तिर्द्योतयति ।

इति वेदान्ति महादेव कृते सांख्य वृत्ति-सारे चतुर्थोध्यायः ॥ ४ । ३२१ ॥

परपक्ष जयार्थं पञ्चमाध्यायः आरभ्यते तत्रग्रन्थारम्भे मङ्गलं न कार्यं निष्प्रयोजन त्वात् तत्रकृतेपि मङ्गले ग्रन्थस्या समाप्तेरकृतेपि मङ्गले समाप्तेश्चेति तद्दूषयति ।

÷ मङ्गलाचरणं शिष्टाचारात्फल दर्शनात् श्रुतितश्चेति ॥ १ ॥

श्रुतितइति शिष्टाचारानुमितश्रुतित इत्यर्थः असमाप्ति-

रंग वैकल्यात्समाप्तिर्जन्मांतरीय मङ्गलात् इति समाधान संभवात् पराक्रांतत्वाच्चसूरिभिः ईश्वरेणाधिष्ठिते कारणे-कार्योत्पत्तिः कुलालाद्यधिष्ठितेमृदादौ घटाद्युत्पत्तिदर्शना-दितिदूषयति ।

+ नईश्वराधिष्ठितेफलसंपत्तिः कर्मणात-त्सिद्धेः ॥ २ ॥

ईश्वरः किंकर्मापेक्ष्यसृजति अनपेक्ष्यवा आद्ये कर्मैवकार-णमस्तुनेश्वरः अंत्ये स्वातंत्र्यविघातः किंचेश्वरस्यस्वा र्थपरार्था वाप्रवृत्तिः नाद्यः तस्याप्तकामत्वस्वीकारात् नांत्यःकारुणिक-स्यदुःख सृष्टिप्रवृत्त्यनुपपत्तेः किंचयः कारणमधितिष्ठतिस स्वोपकारायैवैवमीश्वरस्यापिस्यादित्याह ।

+ स्वोपकारादधिष्ठानंलोकवत् ॥ ४ ॥

स्वोपकारादितिफलेहेतौपंचमो अथास्तुईश्वरेपि स्वोप-कारस्तत्राह ।

– लौकिकेश्वरवदितरथा ॥ ४ ॥

इतरथास्वोपकारस्वीकारेलौकिकेश्वरवत् अनाप्तकामत्वा पत्तिरितिशेषः लौकिकेश्वरवैलक्षण्ये पारिभाषिकएवेश्वरःस्या दित्यतआह ।

+ पारिभाषिकोवा ॥ ५ ॥

वाएवार्थेकथंपरिभाषिकस्तत्राह ।

+ नरागादृते जगत्सिद्धिः प्रतिनियतकार-णत्वात् ॥ ६ ॥

नरागादृतेतंजगन्निर्माणत्वसिद्धिः निर्माणरागयोः कार्यका रणभावादित्यर्थः रागांगीकारेदूषणमाह।

+ तद्योगेपिननित्यमुक्तः ॥ ७ ॥

अपिस्त्वर्थेस्यादितिशेषः।

÷ प्रधानशक्तियोगाच्चेत्संगापत्तिः ॥ ८ ॥

प्रधाननिष्ठायाकर्तृशक्तिस्तद्योगाच्चेत् कर्तृत्वंतर्हिप्रधा- नेनसाकंसंगःस्यात् तच्चासंगोह्ययंपुरुष इतिश्रुतिविरोधः प्र- धानसत्तामात्रेणकर्तृत्वेत्वाह।

÷ सत्तामात्राच्चेत्सर्वैश्वर्यं ॥ ९ ॥

प्रधानसत्तायाः सर्वात्मनः प्रत्यविशेषात्सर्वेषामात्मना मैश्वर्यंस्यात्।

÷ प्रमाणाभावोन्नतत्सिद्धिः ॥ १० ॥

तत्सिद्धिरीश्वरसिद्धिः प्रत्यक्ष प्रमाणाभावस्यप्रसिद्धत्वात् अनुमानंनिराकरोति।

÷ संबंधाभावान्नानुमानं ॥ ११ ॥

संबंधाभावाद्व्याप्त्यभावात् श्रुतिर्जगतोनेश्वरकार्यत्वस्य- बोधकास्ति प्रत्युतप्रधानकार्यत्वस्यैवबोधकाअजामेकामि- त्यादिरस्तीत्याह।

* श्रुतिरपिप्रधानकार्यत्वस्य ॥ १२ ॥

बोधकेतिशेषः अविद्याशक्तियोगात्कर्तृत्वमितिकेचित्तत् दूषयति।

• नाविद्याशक्तियोगोनिःसंगस्य ॥ १३ ॥

स्पष्टं किंच।

• तद्योगेतत्सिद्धावन्योन्याश्रयत्वं ॥ १४ ॥

अविद्यायोगसिद्धौ सत्यांतद्योगेकर्तृत्वयोगे अन्योन्याश्रयत्वंकर्तृत्वसिद्धौ अविद्यायोगादित्यर्थः नचकर्तृत्वाविद्ययोरनादित्वमित्याह।

• नबीजांकुरवत्सादिसंसारश्रुतेः ॥ १५ ॥

सदेवसौम्येदमग्रआसीदेक मेवाद्वितीयमित्यादिश्रुत्याप्रलयेसंसारस्याभावावगमात्संसारस्यसादित्वं अविद्यायाब्रह्माभिन्नत्वे दूषणमाह।

• विद्यातोन्यत्वेब्रह्मबाधप्रसंगः ॥ १६ ॥

विद्यातोज्ञानस्वरूपात् ब्रह्मणोऽविद्याया अन्यत्वे ब्रह्मबाधस्यप्रसंगः विविधपरिच्छेदशून्यत्वस्य ब्रह्मणित्वयांगीकारात् अविद्यायांब्रह्माभिन्नत्वे ब्रह्मणोप्यविद्याभिन्नत्वे च भेदप्रतियोगित्वानुयोगित्वरूपवस्तु परिच्छेदापत्तिरितिभावः किंचविद्याया अविद्यायाः अबाधो बाधोवाआद्ये आह।

• अबाधेनैष्फल्यं ॥ १७ ॥

विद्यायानैष्फल्यापत्तिरित्यर्थः अंत्येआह।

• विद्याबाध्यत्वेजगतोप्येवं ॥ १८ ॥

अविद्यायाइवजगतोपिबाधःस्यात् तथाचजगन्नप्रतीयेतेतिभावः।

• तद्रूपत्वे सादित्वं ॥ १९ ॥

पुनस्तद्रुपत्वे जगदभिनवंजायते इत्यभ्युपगमे अविद्याया अप्यभिनवायाउत्पत्तिर्वाच्यातथाचाविद्यायाः सादित्वंस्यात् एवंचानिर्मोक्षापत्तिरितिभावः इदानींधर्मस्यअदृष्टकारणतामाह।

• नधर्मापलापः प्रकृतिकार्यवैचित्र्यात्।

कार्यवैचित्र्यं प्रकृतिमात्रेण नसंभवति तस्याएकस्वभावत्वात् अपितुधर्मवैचित्र्येण धर्मशब्देनचात्राइष्टसुच्यते नचधर्ममानाभावइत्याह।

• श्रुतिलिंगादिभिस्तत्सिद्धिः ॥ २१ ॥

लिंगमनुमानं आदिपदाद्योगिप्रत्यक्षं देशकालादीनांकारणत्वमाह।

• ननियमः प्रमाणांतरावकाशात् ॥ २२ ॥

नाइष्टमेवकारणमितिनियमः अपितुप्रमाणांतरैस्तत्कारणत्वग्राहकैरन्येषामपिकारणत्वावकाशादन्यान्यपि।

• उभयत्राप्येवं ॥ २३ ॥

इहलोकेपरलोकेचएवं अदृष्टजन्यंसुखंदुःखमिश्रितंसुखमितियावत्।

• अर्थात्सिद्धिश्चेत्समानमुभयोः ॥ २४ ॥

अर्थाल्लोकोत्तरात् विषयात् दिव्यांगनादिरूपात् सिद्धिउत्पत्तिः सुखस्यपरलोकइतिशेषः तथाचनदुःखमिश्रितत्वंसु-

खस्येतिचेत् उभयोरिहलोकपरलोकयोः समानमेतत् इह लोकेपिहिसुखकारणभूताः संत्येवविषयाः किंतुसुखंप्रतिधर्मः कारणंसचहिंसादिमिश्रितत्वान्न सुखंदुःखामिश्रितं जनयितुमीष्टे अपितु दुःखमिश्रितमेवेतिभावः आत्मधर्मत्वं धर्मादीनांदूषयति।

+ अंतःकरणधर्मत्वंधर्मादीनां ॥ २५ ॥

असंगोह्ययंपुरुष इतिश्रुतेरितिभावः गुणः किंगुणवतिवर्त्ततेगुणरहितेवाआद्येआत्माश्रायः अंत्येगुणादिष्वपिगुणप्रसंगः तस्माद्बाधित एवगुण एवंकर्माद्यपीतिकेचित्तदादिनस्तद्दूषयति।

• गुणादीनांचनात्यंतबाधः ॥ २६ ॥

दृष्टत्वादितिशेषः सुखेप्रमाणमाह।

• पंचावयवयोगात्सुखसंवित्तिः ॥ २७ ॥

पंचइंद्रियाणि अवयवाद्वयस्यमनसस्तस्य योगात्संनिकर्षात् सुखसंवित्तिः सुखज्ञानं तथाचमानसप्रत्यक्षविषयः सुखमितिभावः अथव्याप्तिः किंसकृत्सहचारदर्शनात् गृह्यतेउतभूयः आद्येबह्निरासभयोरपिव्याप्तिर्गृह्येत तथाचरासभादपिवह्न्यनुमानापत्तिः नांत्यःशतशः सहचरितयोरपिपार्थिवत्वलोहलेख्यत्वयोर्हीरिके व्यभिचारात् तस्मान्नानुमानं नागमप्रमाणं सुवचमितिकेचित्तद्दूषयति।

• नसकृद्ग्रहणात्संबंधसिद्धिः ॥ २८ ॥

भिचारादर्शन सहकृत सहचारदर्शन व्याप्तिग्राहकं तच्च-सकृद्भूयोवेति नादरइतिभावः संबंधसिद्धिर्व्याप्तिग्रहणं व्याप्तिस्वरूपमाह।

• नियतधर्मसाहित्य मुभयोरेकतरस्यवा-व्याप्तिः॥ २९ ॥

धर्मंश्चाधेयंः नियतमाधेयसाहित्यंव्याप्तिरितिसंबंधः तच्च समव्याप्तिकेस्थले प्रमेयत्वाभिधेयत्वयोरुभयोः। विषमव्याप्तिकेएकतरस्यधूमादेरिति व्याप्तिः पदार्थान्तरमितिमतं दूषयति

• नतत्त्वांतरं वस्तुकल्पनाप्रसक्तेः ॥ ३० ॥

व्याप्तेस्तत्वान्तरत्वेपियत्र व्याप्तिस्तस्याव्यभिचार आवश्यकएवेतिस एवकुतोनव्याप्तिरितिभावः।

• निजशक्त्युद्भवमित्याचार्याः ॥ ३१ ॥

निजासहजाया शक्तिस्त दुद्भवं नियतं वह्नि साहित्यं धूमे इत्याचार्याः बहुवचने न स्वाभिमतत्वं ज्ञापयति।

+आधेयशक्तियोगइतिपञ्चशिखः॥३२॥

आधेय शक्तथायोगी संबन्धे सतिसाहित्य मिति शेषः तथा च साहित्य माधेय शक्त्युद्भव मिति पञ्च शिख इत्येक वचनेन परमतमेत दितिसूचयति प्रसंगात् शक्तेः शक्त पदार्थं रूपतां निरस्यति।

+नस्वरूपशक्तिनियमः पुनर्वादप्रसक्तेः ३३

स्वरूपंचासौ शक्तिश्चेति स्वरूप शक्तिः तया नियमो न

व्याप्तिर्न किन्तु अतिरिक्ता या शक्तथाशक्तोर् नति रिक्तत्वे दूषण माह पुनर्वादप्रसक्तः शक्तौमंत्र इत्यादौ पुनरुक्तायतेरित्यर्थः ।

+ विशेषणानर्थक्य प्रसक्तेः ॥ ३४ ॥

देव दत्त देवदत्त इति वच्छक्तो मन्त्र इति विशेषण मनर्थकंस्यात् ।

+ पल्लवादिष्वनुपपत्तेश्च ॥ ३५ ॥

पल्लवादि स्वरूपस्य मन्त्र प्रयोगात्पूर्वं मपि सत्वेन मन्त्रप्रयोगादृतेपि विषापनोद नादिस्यात् तर्ह्याधेय शक्तिरेवास्तु किं सहज शक्तेतिचे तत्राह ।

÷ आधेयशक्ति सिद्धौनिज शक्ति योगः समानन्ययात् ॥ ३६ ॥

यथान्वय व्यतिरेकाभ्यां शास्त्रेण च पल्लवादिषु व्रीह्यादिषु चाधेय शक्ति सिद्धिस्तथैवा न्वयव्यतिरेकाभ्योततत्त वस्तुषु शास्त्रेण च तत्तत्कर्म भेदेषु शक्ति सिद्धिः शब्दार्थ योस्ता दात्म्यं निषेध यति ।

+ वाच्य वाचक भावः संवन्धः शब्दार्थयोः ॥ ३७ ॥

तादात्म्येहि घटोपि श्रोत्रग्राह्यः स्यात् शब्दो वाचक्षुषः स्यात् अग्नि शब्दोच्चारणे मुखदाहादि प्रसङ्गश्च शक्तिग्रहोपाय माह ।

÷ त्रिभिः सम्बन्धसिद्धिः ॥ ३८ ॥

आप्तोपदेशेन यथायंघट इति वृद्ध व्यवहारेण यथागामान येत्यादौ प्रसिद्ध पद सामानाधि करण्ये न यथा सहकार तरौमधुरं पिकोरौति इत्यादौ कार्यान्विते शक्तिरिति मतं दूषयति ।

* नकार्योनियम उभयथा दर्शनात् ॥३९॥

कार्ये कार्यान्विते नियमः शक्ति नियमः तत्रैव शक्तिरिति यावत् कार्यं इव सिद्धे प्रयोग दर्शनात् ननुवेदेकार्यान्विते शक्तिरस्तु तत्राह ।

÷ लोकेव्युत्पन्नस्यवेदार्थप्रतीते ॥ ४० ॥

यएवलौकिकास्तएववैदिका इतिन्यायादितिभावः अथ वेदप्रामाण्यायाह।

+ नत्रिभिरपौरुषेयत्वाद्वेदस्यतदर्थस्यातींद्रियत्वात् ॥ ४१ ॥

न वेदस्याप्रामाण्यमपौरुषेयत्वात् तत्रत्रिभिर्हेतुभिः ईश्वरस्यनिराकरणेनअन्यास्या संभवेनभ्रांतेःपुरुषधर्मत्वेनाप्तत्वानिश्चयेनेति नन्वस्तुकश्चिद्विशिष्टोजीवः कर्तातत्राह तदर्थस्य-वेदार्थस्य स्वर्गयागयोः साध्यसाधनभावादि रूपस्येंद्रियाद्यगोचरत्वात् ननुधर्मोवेदार्थः सचयागदधि शुक्लादिरूपोनातींद्रियस्तत्राह ।

÷ न यज्ञादेः स्वरूपतोधर्मत्वंवैशिष्ट्यात् ४२॥

नयागादिमात्रधर्मः श्रूद्रकृतयागादेरपिधर्मतापत्तेः किंतु स्वर्गसाधनत्वावच्छिन्नः सचातींद्रियएवकुतः वैशिष्ट्यात् अधिकारिदेशकालादि वैशिष्ट्यंहिस्वर्गसाधनत्वाश्र एवोययोगिनतु-यागादि स्वरूपःव्युत्पत्तरूपयोगमाह।

+ निजशक्तिर्व्युत्पत्त्याव्यवच्छिद्यते ॥ ४३ ॥

बोधकताख्याशब्दस्य सहजाशक्तिर्व्युत्पत्त्याशक्तिग्रहेणव्यवच्छियतेमुख्यगौणताभ्यांव्यवस्थाप्यते यस्यहिसाक्षात्प्रत्ययस्तत्रमुख्यबोधकता यस्यतुशब्दाद्वारातत्रगौणबोधकतेति उपयुज्यतेचैतत् मंत्रस्यमुख्यएवार्थेविनियोगोन गौणइत्यादिनिर्णये शक्तिसिद्धिस्तु अर्थप्रत्ययरूपकार्यानुमेयेत्याह।

+ योग्यायोग्येषु प्रतीतिजनकत्वात्तत्सिद्धिः ४४

योग्यायोग्येषुलौकिक वैदिकेषुतत्सिद्धिः।

• ननित्यत्वंवेदानांकार्यत्वश्रुतेः ॥ ४५ ॥

त्रयोवेदाअजायंतेतिश्रुतेः कृतकत्वेनानित्यत्वानुमानात् वर्णेषूत्पत्तिध्वंसयोः प्रत्यक्षाच्चेतिबोध्यं अनित्यत्वेपौरुषेयत्वापत्तिस्तत्राह।

+ नपौरुषेयत्वंतत्कर्त्तुः पुरुषस्याभावात् ४६॥

ईश्वरनिराकरणादितिभावः अन्यएवकर्त्तास्त्वित्यतआह।

मुक्तामुक्तयोरयोग्यत्वात् ॥ ४७ ॥

सुत्ताद्धनिःसंगत्वे नासुत्तास्य धर्माद्यनभिन्नत्वेन कर्तृत्वा-
द्ययोग्यत्वात्।

+ नापौरुषेयत्वान्नित्यत्वमंकुरादिवत् ॥४८॥

नह्यपौरुषेयत्वनित्यत्वयोर्व्याप्तिरस्त्यंकुरादौव्यभिचारात् अंकुरादीनामपिकार्यत्वात् सकर्तृकत्ववादिनंप्रत्याह।

• तेषामपितद्योगेदृष्टवाधादिप्रसक्तिः ॥ ४९ ॥

तद्योगेकर्तृयोगेदृष्टस्याकर्तृकत्वस्यवाधः आदिग्रव्दात् अदृष्टसकर्तृकत्वकल्पनं कार्यत्वहेतुस्त्वप्रयोजकइतिभावः किं-तर्हिसकर्तृकंतत्राह।

+ यस्मिन्नदृष्टेपिकृतवुद्धिरुपजायतेतत्पौ-
रुषेयम् ॥ ५० ॥

अदृष्टेपि कर्तरि अंकुरादौतु न कृत मितिबुद्धिः किंतू-त्पन्न मिति पौरुषेयं सकर्तृकं।

• निज शक्त्या भि व्यक्तेः स्वतः प्रा-
माण्यम् ॥ ५१ ॥

निजशक्तिर्वज्ञान जनक निजशक्त्ते वा भिव्यक्तेः प्रमात्व-स्येतिशेषः स्वतः प्रामाण्यं प्रमात्वावछिन्न जनकत्वं नतु गुणाधीनं येन वेद प्रामाण्यार्थं आप्तकर्तृकत्वं वेदस्या पेक्ष्ये तानाप्तकर्तृकत्वं पुनर प्रामाण्य प्रयोजक मित्यधिकमाकरे द्रष्टव्यं इतरतन मित्यादि भ्रमेषु वौद्धमतं दूषयति।

÷ नासतःख्यातंनृशृङ्गवत् ॥ ५२ ॥

असदेव शुक्ति रजतता दात्म्यं भाति नियत् तन्न असतोर्थ क्रिया विरहितत्वेन जनकत्वानुपपत्तेः नृशृङ्गस्येव प्रभाकरमतं दूषयति।

+ न सतो बाधदर्शनात् ॥ ५३॥

इदमिति रजतमितिच द्वे ज्ञाने एकं ग्रहण मितरत्स्मरणं भेदाग्रहात् प्रवृत्तिर्नभेद ग्रहादिति प्रभाकराः तन्ननेदं रजत् मितिबाध दर्शनात् अधिकमत्यत्र वेदांतिमतं निराकरोति।

+ नानिर्वचनीयस्यतदभावात् ॥ ५४ ॥

तदभावात् नसत् नासदित्य निर्वचनीयत्वे न निर्वचने नानिर्वचनीया भावात् नैयायिकमतं निराकरोति ॥

+ नान्यथा ख्यातिः स्वव चोव्याघातात् ॥ ५५ ॥

शुक्तिरेव रजतात्मना व भासत इति आरोपित रजत मेव तत्राव भासत इति च स्व वचसोः परस्पर विरोधात् स्वमत माह ॥

+ सदसतख्यातिर्बाधाबाधात् ॥५६॥

इदंरजतं सदसदात्मकं नेदं रजत मिति हिरजतस्यबाधो न पुरोवर्त्तिंत इति स्फोटं निराकरोति ॥

÷ प्रतीत्य प्रतीतिभ्यां न स्फोटात्मकः शब्दः ॥ ५७ ॥

प्रतीति र्वर्णानां अप्रतीतिः स्फोटस्य वर्णातिरिक्तस्य तस्मान्न स्फोटः शब्दः किंतु वर्ण एवतेचा नित्या इत्याह ॥

+ नशब्दनित्यत्वंकार्यताप्रतीते ॥५८॥

उत्पन्नोगकार इत्यादि प्रतीतेः आशङ्कते ॥

+ पूर्वसिद्ध सत्वस्या भिव्यक्तिर्दीपेनेवघटस्य ॥ ५९ ॥

यथांधकारस्थो घटोदीपेनाभि व्यज्यते तथावर्णाः ध्वनिभिर्वंग्ज्यते तथा वर्णाः ध्वनिभिर्व्यज्यन्ते तदभावान्न सन्तीति प्रतिभातं नत्वसत्वात् दूषयति ॥

+ दूषयति सत्कार्य सिद्धांतश्चेत् सिद्ध साधनं ॥ ६० ॥

अभिव्यक्ति माश्रित्य नित्यत्व कथनस्य कोभिप्रायः किं सत्कार्यं नत्वसदिति किंवाप्रकृति पुरुषयोरि व नित्यत्वंवर्णानामितिः वाद्यः इष्टापतेः अंपरच वक्ष्यते एकात्म वादं प्रत्याह ॥

+ नाद्वैत मात्मनो लिङ्गात्तद्भेद प्रतीतेः ॥ ६१ ॥

आत्मनोऽद्वैत मैक्यं न कुतः लिङ्गाज्जरामरणादितः आत्मभेद सिद्धे पूर्वंचानेकत्र सिद्धवतुक्त मिहतु साध्यत इति न पुन रुक्तिः ॥

+ नानात्मनापि प्रत्यक्ष वाधात् ॥६२॥

अनात्मनाघटादि नापिनात्मन एकत्वं प्रत्यक्ष वाधात् किञ्च ॥

+ नोभाभ्यांतेनैव ॥ ६३ ॥

तेनैव प्रत्यक्ष वाधेनैव उभाभ्यां आत्मानात्मभ्यां रेकत्नत्वं सुखी अहंदुःखी घटोयमित्याद्य वाधित प्रत्यया एवात्मैक वाधकाः सन्तीतिभावः ननु अद्वैतश्रुतेः कागतिस्तत्राह ॥

+ अन्यपरत्वमविवेकानांतत्र ॥ ६४ ॥

तत्रात्मैकश्रुतौ आत्मत्वैकत्व प्रतिपादकायो अविवेकानां मूढ़ानां अन्यपरत्वं आत्मैक परत्वं भातित शेषः तथाच न श्रुति विरोध इतिभावः किञ्चैकात्मवादिनां जगदुपादान कारणमपिनोप पद्यत इत्याह ।

+ नात्मानाविधानोभयं जगदुपादानकारणानिः सङ्गत्वात् ॥ ६५ ॥

नात्माकूटस्थ त्वात् अविद्यासतीति चेत् द्वैतापतिः असती चेन्नकारणं वन्ध्यापुत्रवत् अतएवनो भयमपि चिदानन्द रूप आत्मेति तन्मतं दूषयति ॥

+ नैकस्यानंदचिद्रूपत्वेद्वयोर्भेदात्॥६६॥

आनन्दः सुखंचित् ज्ञानं तयोर्लोके भेदात् अलौकिक

भिदमिति चेत् प्रमाणा भावेसिद्धरेत् किञ्च चित् आनन्द रूपत्वे संसार दशायां कुतोनानु भवः अविद्याति रोधाना-दितिचेत् सो असंवद्धा कथंतिरोदध्यात् सम्बद्धा चेद संगत्य-श्रूतिविरोधः किञ्चमुक्तौ आनन्दो नु भूयतेन वा आवेवे के नानुं भूयते आत्मतेति चेत् एकस्यकर्त्तृ कर्मत्वविरोधः न चेत् कि मानन्द रूपतया अथानन्दं ब्रह्मणो विद्व न विभेतिकुतश्च नेतिकाऽगतिस्तत्राह ॥

+ दुःखनिवृत्तेर्गौणि ॥ ६७ ॥

सुखव्यय देश इति शेषः प्रकारान्तरमाह ॥

+ विमुक्तिप्रशंसामंदानां ॥ ६८ ॥

मन्दोनां राजसता मसानां विमुक्ति प्रशंसा प्रवर्त्त नार्थं प्रोत्साहन मित्यर्थः मनोवैभवं निराकरोतिन।

+ नव्यापकत्वं मनसः करणत्वादिं-द्रियत्वाद्वावास्यादिवच्चक्षुरादिवच्च ॥ ६९ ॥

यत्तु शिरसिमे वेदनायादेमे सुख मित्यादि ज्ञानं मनसो विभुत्व साधकमाहुस्तदाशु सञ्चारित्वान्मनसः क्रमो ग्रहण निमित्तमितिन तेन विभुत्व सिद्धिः ॥

* सक्रियत्वाद्गतिश्रुतेश्च ॥ ७० ॥

सक्रियत्वोदित्यनुमानन्दर्शितङ्गति श्रूतेरिति सक्रियत्वे मानंदर्शितं।

÷ ननिर्भागत्वंतद्योगाद्घटादिवत् ॥ ७१ ॥

मनसोनाकरणकत्वं कारणयोगात् किमस्यकारणमिति-चेत् अहंकार इति ग्रहाण किञ्च ॥

÷ प्रकृतिपुरुषयोरन्यत्सर्वमनित्यं ॥७२॥

प्रकृते. कथं नित्यत्व' तत्राह ॥

* नाभागलाभो भागिनोनिर्भा गत्व-श्रुतेः ॥ ७३ ॥

भागाः कारणानियस्य कार्यत्वेन सन्तितस्य प्रधानस्य न कारणलाभो निर्भागत्वश्रुतेः मायान्तु प्रकृतिं विद्योदिति सावसाधरण प्रकृतित्व श्रुते: प्रधानस्य सकारत्वेन वस्थानाच्च आनन्दाभिव्यक्तिर्मुक्ति रितिमतं दूषयति ॥

+ नानंदाभिव्यक्तिर्निर्धर्मकत्वात् ॥७४॥

किमात्मस्वरूप आनन्द उतान्यः आद्ये संसार दशायां मुक्ति प्रसंगः अन्त्ये कार्यं भावस्यावश्यं नाशादनिर्मोक्षापतिः विशेषगुणोच्छेदो मोक्ष इति मतं निरस्यति।

+ नविशेषगुणोच्छित्तिस्तद्वत् ॥७५॥

तद्वदिति न मुक्ति रित्यर्थः सामान्य गुणस्वीकारे प्रमाण भावादिति भावः देह परिमाणोस्यात्मनो देहान्निष्क्रान्त-स्य सततोर्ध्वं गमनं मुक्तिरिति वाह्यमतं दूषयति।

+ नविशेषगतिर्निष्क्रियस्य ॥ ७६ ॥

देहपरिमाणत्वे स्यात्मनो हस्तिकमि देह प्रवेशे उपचया

पचययोरावश्य कत्वेन सावयवत्वं वाच्यं ततश्चा नित्यतास्या दतोव्यापकत्व मात्मन उचितं ततोनिष् क्रियत्वादूर्ध्वं गमनं न संभवतीतिभावः बौद्धमुक्तिं दूषयति ॥

* नाकारोपरागोच्छित्तिःक्षणिकत्वादि दोषत्वात् ॥ ७७ ॥

आकारस्य विषयस्य उपरागः सम्बन्धस्तदुच्छित्तिर्न मुक्तिः पूर्वं पूर्वं विषयो सम्बन्धोच्छेदस्य सर्वक्षणिकत्वेन संसारेपि- सुलभत्वात् स्वच्छसंवित्प्रवाहस्या पिक्षणि कत्वात् आत्मनोपि- क्षणिकत्वेनकस्य मुक्तिरित्यादि दोषाच्च आत्मनि सर्वोच्छेदो मुक्तिरिति मतंदूषयति ॥

\+ नसर्वोच्छित्तिर पुरुषार्थत्वादि दो- षात् ॥ ७८ ॥

कोहि सर्वस्या पराधो येनतदुच्छित्तिः प्रार्थनीयास्याम् असम्भवाच्च ॥

\+ एवंशून्यमपि ॥ ७९ ॥

अपुरुषार्थत्वादिदोषात् असंभवाच्चेत्यर्थः लोकोतर देशे लोकोतर स्रक्चंदनवनितादि लाभएव मुक्तिरिति दूषयति ॥

* संयोगाश्च वियोगान्ता इति न दे- शादिलाभेपि ॥ ८० ॥

सष्टंभागस्य जीवस्य भागिनि ब्रह्मणि योगीमुक्ति रिति दूषयति ॥

+ न भागियोगो भागस्य ॥ ८१ ॥

ब्रह्मजीवयोर्भागि भागत्व कल्पनायां माना भावात् योगस्यवियोङ्गात त्वाच्च ॥

• नाणिमा दियो गोप्यवश्यं भावित्वात्तदुच्छितेरि तरयोगवत् ॥ ८२ ॥

तेन्द्रादि पदयोगोपि तद्वत् ॥ ८३ ॥

सूचे स्पष्टे इन्द्रियाणि भौतिकानि इति निरस्यति ॥

÷ नभूत प्रकृतित्व मिन्द्रियाणा महंकारकत्वश्रु तेः ॥ ८४ ॥

भूत प्रकृतित्व मित्यत्र बहुव्रीहेस्त्व प्रत्ययः सात्विकाहंकारकार्यत्वं हि इन्द्रियाणां श्रूयते पुराणा दषु भूत प्रकृतित्व मितिलौकिको व्यपदेशस्तु येनेन्द्रियेण यद्भूत कार्यं तस्मात्तं गृह्यते तस्यतत्प्रकृति त्वाभिमान कृतः षड़पदार्थास्तत् ज्ञानान्मुक्तिः षोड़श पदार्थास्तत् ज्ञानान्मुक्ति रितिवैशेषिक नैयायिक मतदूषणाय सूत्रेन ॥

+ षट् पदार्थ नियमस्तद्बो धात् मुक्ति श्च ॥ ८५ ॥

• षोडशादिष्प्येवं ॥ ८६ ॥

आदिशब्दादन्येपि नियतपदार्था निराकार्या. नित्येश्वतु विधैः नियमैः परमाणु भिर्जगदारंभ इति पूषयति ॥

• नाणुनित्यता तत्कार्यत्वश्रुतेः ॥८७॥

प्रकृतिपुरुषयोरेव नित्यत्वश्रवणे नेतरस्य सर्वस्य कार्यत्वावगमादित्यर्थः कार्यत्वादेव च परमाणुर्न निरवयव इत्याह।

• न निर्भागत्वं कार्यत्वात् ॥ ८८ ॥

परमाणूनामितिशेषः यत्कार्यं तन्ननिर्भागं यथा घट इति उद्भूतरूपनिबन्धनं द्रव्यप्रत्यक्षत्वमितिदूषयति ॥

÷ न रूपनिबन्धनात् प्रत्यक्षत्वनियमः ॥ ८९ ॥

इहायं पञ्चोत्याकाशस्य प्रत्यक्षत्वादिति अणुमहद्दीर्घह्रस्वमिति चतुर्धा परिमाणमितिदूषयति ॥

÷ न परिमाणचातुर्विध्यं द्वाभ्यांतद्योगात् ॥ ९० ॥

महदणुभ्यामेव तयोः कार्यकारणयोर्योगात् अन्येषां परिमाणानां महदणुभेदत्वेनैवोपपतेः प्रकृतिपुरुषाभ्यामन्यत् सामान्यं नित्यमितित दूषयति ॥

+ अनित्यत्वेऽपि स्थिरतायोगात् प्रत्यभिज्ञानं सामान्यस्य ॥ ९१ ॥

यथा सोयं देवदत्त इति न सामान्यविषयाप्रत्यभिज्ञा किन्तु व्यक्तिविषया व्यक्तेः स्थिरत्वात् तथा सामान्यस्यापि स्थिरत्वात् प्रत्यभिज्ञा नतु नित्यत्वात् ॥

+ न तदपलापस्तस्मात् ॥ ९२ ॥

तस्मात्प्रत्यक्षात्तदपलापः सामान्यापलापो न कार्यः अबाधितप्रत्यक्षस्य विषयसाधकत्वादितिभावः अन्यापोहो जातिरितिनिरस्यति ॥

+ नान्यनिवृत्तिरूपत्वं भावप्रतीतेः॥९३॥

गोत्वादेः अगोभेद रूपत्वं न कुतः भावप्रतीतेः अगोरूपप्रतीयोगीस्मरणं विनैव भवरूपतया तत्प्रतीतेः अतएवोक्तं सिद्धश्चागौरयोर्हेतगो निषेधात्मकश्च सः तत्र गौरेव वक्तव्यो न भावः प्रतिषिध्यते गव्यसिद्धे त्वगौ नास्तितदभावे चगौः कुतइति सादृश्यं पदार्थांतरमिति निरस्यति ॥

+ न तत्वांतरं सादृश्यं प्रत्यक्षोपलब्धेः॥९४॥

तत् तद्द्रव्यगुणादि रूपस्यैव प्रत्यक्षेणोपलम्भादित्यर्थः।

+ निजशक्त्यभिव्यक्ति र्वा वैशिष्ट्यात् तदुपलब्धेः ॥ ९५ ॥

निजशक्त्यभिव्यक्तिरिति अभिव्यक्ता निजशक्ति रित्यर्थः अभिव्यक्ता तत्तत्कार्यानुकूलतया सिद्धा वैशिष्ट्यात् तादृशशक्ति सम्बन्धात्तदुपलब्धेः सादृश्योपलम्भादित्यर्थः तथा च तत्तत्पदार्थनिष्टा शक्तिरेव सादृश्यप्रतीति विषय इति भावः।

+ न संज्ञा संज्ञि सम्बन्धोऽपि ॥ ९६ ॥

नित्य इति शेषः किं बहुना शब्दार्थयोः सम्बन्ध एव नित्य इत्याह ॥

• न सम्बन्धनित्यतोभयानित्य-त्वात् ॥ ९७ ॥

स्पष्टं अजसम्बन्धं निराकरोति।

• नाजः सम्बन्धी धर्मिग्राहकमान-बाधात् ॥ ९८ ॥

विशिष्टप्रतीत्या विशेषणविशेष्याधीनसम्बन्धस्यैवसिद्धे तस्य च विशेषणविशेष्याभावे सम्भवात् सम्बन्धस्याजत्वम-युक्तमिति समवायं निरस्यति।

+ न समवायो स्तिप्रमाणाभावात् ९९

प्रमाणाभाव मेवोपपादयति।

÷ उभयत्राप्यन्यथा सिद्धिर्नप्रत्यक्ष-मनुमानं वा ॥ १०० ॥

समवायोहि शुक्लोघट इत्यादि प्रत्यक्षं प्रमाणं विशिष्ट-प्रतीति विशेषणविशेष्योभयसबन्धविषयाविशिष्टप्रतीति-त्वात् दण्डीति प्रतीतिवदित्यनुमानं च उभयत्रापि तादा-त्म्येनैवान्यथा सिद्धिः इह तन्तुषु पट इत्यादि प्रतीतिस्तु स्ववासनामात्र कल्पिता नार्थसाधिका किञ्च समवायः सम्बद्धः सम्बन्धिनौ सम्बन्धयेत् असंवद्धोवा आद्ये तस्यापि सम्बन्धान्तरं वाच्यमित्येवमनवस्था समवायस्य स्वरूपमेव

सम्बन्धस्येत् आदावेव क्रुतीन तत् प्रस वद्धस्य सम्बन्धत्वं त्व-न्याय्यमेवेति देशान्तरसंयोगविभागाभ्यामनुमेयैव क्रियान प्रत्यक्षा सूर्यक्रियावदिति मतं निरस्यति ।

• नानुमेयत्वमेव क्रियाया: नेदिष्टस्य-तत्तद्वतोरेवापरोक्षप्रतीतेः ॥ १ ॥

नेदिष्टस्यातिनिकटवर्तिनः तत्तद्वतोः क्रियाक्रियावतोः तथा चानुभवापलापो नोचित इतिभावः सूर्यक्रिया तु दूरस्थत्वान्न प्रत्यक्षा पञ्चभूतारब्ध शरीरमिति दूषयति ।

+ नपाञ्चभौतिकं शरीरंबहूनामुपा-दानायोगात् ॥ २ ॥

उपादानत्वायोगादित्यर्थः किञ्च शरीरस्य पांचभौतिकत्वे घटाकाशसंयोगस्येवाप्रत्यक्षत्वापत्तिःयोग्यसमवेतस्यैव प्रत्यक्षत्वनियमात् शरीरं द्विविधमित्याह ।

•न स्थूलमिति नियमआतिवाहिकस्यापि-विद्यमानत्वात् ॥ ३ ॥

मनसोनिराश्रयस्य गत्यभावाद्देहांतरगमने आश्रयोवाच्यः स एवाति वाहिकं सूक्ष्मं च शरीरमित्युच्यते अंगुष्टमात्रं पुरुषं निश्चकर्ष यमोवलादितपत्र पुरुषपदवाच्यमपि तत् पुरि स्थूलशरीरे शेते इति व्युत्पत्तेः नेन्द्रियाणां प्राप्यकारित्वनियमः चक्षुषस्तैजसत्वेन विषयदेशे गमनसंभवेऽपि श्रो-

चादेस्तदभावात् किंतु शब्दएववीचीतरंगन्यायेन कदंबमुकुलन्यायेन वा श्रोत्रदेशंगतः श्रोत्रेण गृह्यते गन्धोपि सामग्रोघ्राणादेशमागतो घ्राणेन एवमन्यत्रापि दूरेशब्द इत्यादि प्रतीतिस्तु भ्रान्तिरेव कारणशब्दविषयिणी वेत्यादि मतं निरस्यति।

**+ नाप्राप्तप्रकाशकत्वमिन्द्रियाणामप्राप्तेः सर्वप्राप्तेर्वा ॥ ४ ॥**

अप्राप्तानां विषयासम्बद्धानां प्रकाशकत्वमिन्द्रियाणां न अप्राप्तेरसम्बन्धात् अथ वप्राप्तत्वादिन्द्रियाणामस्त्येव सम्बन्धस्तत्राह सर्वं प्राप्तेः तथाच जगदुदरवर्त्ति सर्वमेव गृह्णीयुः तस्माद्विलक्षणः सम्बन्ध आवश्यक इति भावः सच वृत्तिरित्याह।

**• प्राप्तार्थप्रकाशलिङ्गा वृत्तिसिद्धिः ॥५॥**

व्यक्तं वृति स्वरूपमाह।

**• भागगुणाभ्यां तत्वांतरं वृत्तिः संबंधार्थं सर्पतीति ॥ ६ ॥**

कार्य्यानुमेया वृतिस्तत्वांतरं नाहं कारिकं न भागो न वा गुणः अनियतपदार्थवादिनोहि साङ्ख्याः वाचाऽसंबद्धस्थानायोगात्सर्पति इति शब्दो यथानुभवकल्पनार्थः तथाचाहुः यदि चक्षुर्विषयपर्यन्तं गच्छति तर्हि अतिवेगवत्वात्तेज सस्यादत आह।

• न तेजोपसर्पणा तैजसं चक्षुर्वृत्ति-तस्तत्सिद्धेः ॥ ७ ॥

तेजस इवापसर्पणात् दूरगमनात् चक्षुः वृत्तयः प्रसरद्रूपाः स्फुरिताश्चास्य यत्र च अदृष्टानुग्रहात्तत्रसंव द्यार्थाववोधकादिति अमूर्त्तावृत्तिः कथं सर्पति तत्राह ।

• नद्रवोनियमस्तद्योगात् ॥ ८ ॥

द्रव्ये एवक्रियेति न नियमः किन्तु तद्योगात्क्रियायोगात् क्रियः नियमः यत्र प्रमाणं दृश्यते तत्र क्रियेत्यर्थः वृत्तिक्रियायां च विषय प्रकाशः साधक इति भावः देशभेदे भौतिकानींद्रियाणि भविष्यंति यथा वृश्चिकदष्टस्य मरणमिति तत्राह ।

• न देशभेदेप्यन्योदानतास्मदादिवन्नियमः ॥ ९ ॥

अन्योपादानकत्वमिन्द्रियाणामितिशेषः किन्तु अस्मदादिवत् अस्मदादीन्द्रियाणामिव नियमश्चाहं कारिकत्वमेव चाहंकारिकाणीन्द्रियाणीति स्वशरीरे व्याप्तिर्गृहीताः तद्व्यभिचारे धूमोप्यग्निं व्यभिचारे दितिभावः यदि न पंचभूतो पादानकं शरीरं तर्हि पाञ्चभौतिकमिति व्यवहारः कथं तत्राह ।

+ निमित्तव्यपदेशात्तद्व्यपदेशः ॥१०॥

पञ्चभूतेति निमित्तव्यपदेशात् तद्व्यपदेशः पाञ्चभौतिकेति नैमित्तिकव्यपदेशः उपादानतैवनिषिध्यते न निमित्तत्वेतिभावः शरीरभेदानाह ।

+ ऊष्मजाण्डजजरायुजोद्भिजसांकल्पिकसांसिद्धिकंचेति न नियमः ॥ ११ ॥

सांकल्पिकं मन्वादिशरीरं सांसिद्धिकं मंत्रौषधादिसिद्धिजं इति हेतोः चत्वार्य्येवेति न नियमः ।

+ सर्वेषु पृथिव्युपादानमसाधारण्यात् तद्व्यपदेशः पूर्ववत् ॥ १२ ॥

सर्वेषु शरीरेषु पार्थिवमित्यसाधारणव्यपदेशात् सूर्यादिलोकस्थे तैजसादिशरीरेऽपि पार्थिवावयवावष्टम्भकत्वमेव तेज आदेः उपभोगी पार्थिवावयवानामेवोपयोगात् तद्व्यपदेशः इतरभूतव्यपदेशः पूर्ववत् निमित्ततयेत्यर्थः प्राणोवा पुरिति मतं निरस्यति ।

÷ न देहारंभकस्य प्राणत्वमिन्द्रियशक्तितस्तत्सिद्धेः ॥ १३ ॥

देहजनकस्य वायोः न प्राणत्वं सर्वेन्द्रियशक्तितः सर्वेन्द्रियशक्तिरूपेण तत्सिद्धेः प्राणसिद्धेः सामान्यकरणवृत्तिः प्राण इतिभावः ।

• भोक्तुरधिष्ठानाद्भोगायतननिर्माणमन्यथा पूतिभावप्रसंगः ॥ १४ ॥

योनौ वीजमारभ्येतग्रादिः अधिष्टानात्सम्बन्धविशेषात् पूतिभावोदुर्गंधिता पुरुषस्य भृत्यप्रायं प्रधानं तद्द्वारेवाधिष्टानमस्तु नतु स्वातंत्र्येण वीजादौ तत्राह।

÷ भृतद्वारास्वाम्यधिष्टितिर्नैकान्तात् १५

प्रधानद्वारा पुरुषस्य धिष्टितिः नैकान्तात् व्यभिचारात् सर्वंच विद्यमानत्वादिति यावत् न पूतिभावविरोधिनीतिशेषः सुषुप्तिदृष्टान्ते नं मोक्षे दुःखाभावं वक्तुमाह।

• समाधिसुषुप्तमोक्षेषु ब्रह्मरूपता ॥१६॥

ब्रह्मरूपता दुःखासम्वेदनं मोक्षेविशेषमाह।

+ द्वयोः सबीजं त्वन्यत्र तद्धतिः ॥ १७ ॥

सबीजत्वं पुनर्दुःख प्रयोजकसंस्कारवत्वं तद्धतिः संस्कारवतिः मोक्षे प्रमाणमस्तीत्याह।

÷ द्वयोरिव त्रयस्य दृष्टत्वान्नतु द्वौ ॥१८॥

यथा सुषुप्तिः प्रत्यक्ष सिद्धा यथा वा समाधि रागमसिद्धः तथा मोक्षोपि शास्त्रसिद्धः तत्रापि द्वौ सुषुप्तिसमाधीनात्यंत पुरुषार्थौ सबीजत्वात् किन्तु मोक्ष एव निर्बीजत्वादितिभावः रागादीनामेव बन्धहेतुत्वात् किं संस्कारा परपर्याय वासनयेत्यतआह।

* वासनयाऽनर्थख्यापनं दोषयोगेऽपि न निमित्तस्य प्रधानबाधकत्वम् ॥ १९ ॥

दोषयोगेऽपिवासनयैव अनर्थख्यापनं सौंदर्यासौंदर्यज्ञानकारणमितिशेषः अतोनरागादेरेवबंधहेतुत्वं किंतु निमित्तस्यागगादेरपिनिमित्तस्यावासनायाःप्रधानबाधकत्वं मोक्षबाधकत्वं तस्माद्वासनोच्छेद एव यतितव्यमितिभावः इष्वादिक्षेपेवेगाख्यसंस्कारात् क्रियाक्रियतस्य स इतरनेकसंस्कारास्तान्निरस्यति।

+ एकः संस्कारःक्रियानिवर्तको न-तु प्रतिक्रियं संस्कारभेदाः बहुकल्पनाप्रसक्तेःस्पष्टम् ॥ १२० ॥

नन्वेकस्मात्संस्कारादेका क्रिया ततः संस्कार इति लोके बुद्धिरस्ति तत्राह।

÷ नबाह्यबुद्धिनियमः ॥ २१ ।

एकस्मादेव बाह्यः क्रिया इतरपि बुद्धिरस्ति तस्माल्लाघवादेक एव संस्कारः जङ्गमशरीरन्यायं स्थावरेऽति दिशति।

÷ वृक्षगुल्मलतौषधिवनस्पतितृणवीरुधादीनामपि भोक्तृभोगायतनत्वं पूर्ववत् ।२२

वीरुत् झटिति वृक्षप्रमासारिणी लता अत्र प्रमाणमाह।

स्मृतेश्च ॥ २३ ॥

अभिवादितस्वयो विप्रः आशिषं न प्रयच्छति श्मशाने जा-

यते वृक्षोग्टम्नकं कनिषेवितः शरीरजैः कर्मदोषैर्याति स्थावर-तांनरः वाचिकैः पक्षिमृगतां मानसैरंतरजातितामितरादि-श्रुतिस्तेषामपि शरीरित्वावगमात् वृक्षादीनां शरीरित्वे-कर्माधिकारा पतिं निरस्यति।

+ नदेहमात्रतः कर्माधिकारित्वं वैशिष्ट्य-श्रुतेः ॥ २४ ॥

अर्थी समर्थो विद्वान पर्युदस्तोधि कारीतिभावः देह-भेद माह।

• त्रिधा त्रयाणांव्यवस्था कर्मदेहोपभोग-देहोभयदेहाः ॥ २५ ॥

वीतरागाणां फलन्यासेन कर्मकुर्वतां कर्मदेहः पश्चादी-नासुपभोग देहः भोगिनां कर्मिणामुभय देहः चतुर्थं देह-माह।

• नकिंचिदप्यनुशायिनः ॥ २६ ॥

अनुशय: प्रारब्धकर्मशेषः सोस्थास्तीत्यनुशयीतस्य ज्ञानि-न इतरर्थः न किञ्चिदपि कर्मेतिशेषः ज्ञानीप्रारब्धशेषं भुञ्जा-नो न विधिनिषेधेष्वधिक्रियत इतिभावः जीवसम्बन्धिन्यो ज्ञानेच्छ कृतयो यद्यप्यनित्यास्तथापि काचिन्नितरा भविष्यन्ती त्यतआह।

÷ न वुद्धयादि नित्यत्वमाश्रय विशेषेऽपि-वह्निवत् ॥ २७ ॥

यद्यपि आश्रयविशेषः सेत्स्यति तथापि ज्ञानादयोनित्याएव तन्नस्युः स्वकीयज्ञानादिषु व्याप्तिग्रहात् अन्यथा-चन्दनप्रभववह्नेरनुष्णत्वमपिस्यादिति आश्रयोपि नास्तीत्याह।

• आश्रया सिद्धेश्च ॥ २८ ॥

ईश्वरस्य निराकृतत्वात् मणिमन्त्रौषधितपः प्रभावजसिद्धयोदृष्टा नतुयोगसिद्धयस्तत्राह।

+ योगसिद्धयोऽप्यौषधादिसिद्धिवन्नापलपनीयाः ॥ २९ ॥

अणिमादिसिद्धिकायव्यूहपरपुरप्रवेशादयो दृष्टास्तेच मन्त्रादिभ्यः क्षुद्रसिद्धिप्रदेभ्यो सम्भवन्तो योगमेवावलंवत इति भावः पृथक् भूतानां चैतन्यादर्शनेऽपि देहाकारपरिणतेषु तेषु स्यादित्यत आह।

÷ न भूतचैतन्यं प्रत्येका दृष्टेः सांहत्येऽपि च सांहत्येपि च ॥ १३० ॥

यत्रहि प्रत्येकं स्वल्पाशक्तिर्दृश्यते भवति तत्र संघातेधिका शक्तिः यथा तंतूनां स्वल्पशक्तिमतां समुदायाद्गज बन्धनशक्तिः न च तथा भूतानां पृथक चैतन्यं दृष्टं येन सांहत्ये चैतन्योद्भवः स्यात् उक्तोप्यर्थो व्यवहित इति पुनः स्मारितः वीप्सा अध्यायसमाप्त्यर्था।

* इति वेदान्तिमहादेवकृते सांख्य प्रवचनवृत्ति सारे पञ्चमोध्यायः । ५ । ४५७ ।

षष्टस्तु चाध्यायः तत्र प्रायशः पूर्वोक्त एवार्थ उपसंह्रोयते सूत्राण्यपि प्रायशः स्पष्टानि क्वचिद्व्याख्यायन्ते ।

— अस्त्यात्मा नास्तित्वे साधनाभावात् ॥१॥

— देहादिव्यतिरिक्तो वैचित्र्यात् ॥ २ ॥

— षष्ठीव्यपदेशादपि ॥ ३ ॥

मम देह इति ज्ञान पूर्वकात् शब्दाभिलापादित्यर्थः ।

— न शिलापुत्रकवद्धर्मिग्राहकमानबाधात् ॥४॥

शिलापुत्रकस्य शरीरमितिवन्न भेदव्यवदेशो गौणः किन्तुमुख्यः धर्मिण आत्मनो ग्राहकेण शरीरादिभेदग्राहकेण मानेन प्रत्यक्षानुमान शब्दरूपेण गौणत्वस्य वाधात् शिलापुत्रकस्य शरीरमित्यत्र तु प्रत्यक्षेण वा भेदग्रहात् कृशोहमित्यादिस्तु भ्रमणतादात्म्याभिमान इति भावः ।

+ अत्यन्तदुःखनिवृत्याकृतकृत्यता ॥ ५ ॥

न तु सुखोत्कर्षात् तस्यक्षयि त्वात् ॥

÷ यथादुःखात् द्वेषापुरुषस्य न तथा सुखादभिलोषः ॥ ६ ॥

यथासुखेऽपि दुखात् दुःखावश्य भावात् द्वेषः तथादुःखेऽपिसुखात् सत्मात् लभ्यमनात् अभिलाषो न सुखंहि बहु

त्तरं दुःखमिश्रत मिति न सुखेभिलाषइतिभावः ननुकस्य-चित् दुःखामिश्रतमपि सुखं भविष्यतीत्यतआह ।

÷ नकुत्रापि कोऽपि सुखीति ॥ ७ ॥

दुःखामिश्रितेति सुखीत्यस्यादि नन्वस्तु दुःखमिश्रणं सुखं तु काम्यं भवेदत आह ।

÷ तदपिदुःखशबलमिति दुःखपक्षे निक्षिपंते विवेचकाः ॥ ८ ॥

स्वर्गाद्यर्थार्जन च्यय भय दुःखमस्त्येवेतिभावः सुखस्यैव पुरुषार्थत्वं लोके दृष्टं न दुःखाभावस्येत्यत आह ।

÷ सुखलाभाभावादपुरुषार्थत्वमितिचे-न्नद्वैविध्यात् ॥ ९ ॥

रागिणांसुखं पुमर्थः वीतरागीणां पुनर्दुःखाभाव एव ।

÷ निर्गुणत्वमात्मनोऽसंगत्वादिश्रुतेः॥१०॥

विशेषगुणोच्छित्तिर्मुक्तिरिति पक्षे सामान्यगुणस्योच्छा र आपतेत् सच श्रुतिविरुद्धः नन्वसङ्गस्य पुरुषस्य धर्माध-र्मो ऽधर्मान्तरत्वमिति कथं तत्राह ।

÷ परधर्मत्वेपि तत्सिद्धिरविवेकात् ॥ ११ ॥

प्रकृतिधर्मत्वेपि प्रकृतिपुरुषाविवेकात् छायापत्त्यात्मनः स्वर्गादिप्राप्तिरित्यभिमानः ।

+ अनादिरविवेकोन्यथा दोषद्वयप्रसक्ते १२

यदिसादिर विवेको भवेत्तर्हि तदुत्पत्तेः पूर्वंमोक्षःस्यात्

तदुत्पत्तौ च वन्ध इति मुक्तस्य पुनर्वन्धापत्तिरेकोदोषः अवि वेकाभावस्यापि विद्यमानत्वान्मुक्तसिद्धौ अविवेक नाशार्थं यत्नोऽनर्थकःस्यादिति द्वितीयो दोषः ।

÷ ननित्यःस्यादात्मवदन्यथानुछित्तिः १३

आत्मवन्नकूटस्थं नित्यः नापि प्रकृति वत्परिणामि नित्यः अन्यथानित्यत्वे ऽनुछित्तिः स्यात् ।

÷ प्रतिनियतकारणनाश्यत्वमस्य ध्वांतवत् ॥ १४ ॥

यथाध्वान्तस्य नाशकः प्रकाशएवमस्य अविवेकनाशकमाह ।

÷ अत्रापिप्रतिनियमोन्वयव्यतिरेकात् १५

विवेकख्यातिरितिशेषः ।

÷ प्रकारान्तराभावादविवेकएववन्धः १६

वन्धः संसारो ऽविवेक एवेति कार्यं कारणयोर भेदो पचारात् धर्मादिकं तु सहकारीतिभावः मुक्तेःकार्यत्वान्नाशमाशंक्याह ।

÷ न मुक्तस्य पुनर्वंधयोगोप्यनावृत्तिश्रुतेः ॥ १७ ॥

अपिशब्दाद्विवेकख्यात्यामुक्तिः समुच्चीयते उभयत्रापि अना वृत्तिश्रुतेः आत्मा ज्ञातव्यः प्रकृतितो विवेक्तव्यो न पुनरावर्तत इत्यादिः भावकार्यस्यैव नाशनियम इति भावः विपक्षे दोषमाह ॥

÷ अन्यथापुरुषार्थत्वं ॥ १८ ॥

सुषुप्ति समाधि तुल्यत्वात् एतदेवस्पष्टयति ।

÷ अविशेषापत्तिरुभयोः ॥ १९ ॥

उभयोः संसारमुक्तयोः मुक्तौ अन्तरायाणां ध्वंसमात्रं धर्मान्तरप्राप्तिर्वा तत्राह ।

* मुक्तिरन्तरायध्वस्ते र्न परः ॥ २० ॥

अन्तरायध्वंस एव मुक्ती न परः धर्म इति शेषः धर्मान्तर पक्षे कूटस्थत्व व्याहतिरितिभावः अन्तरायास्तु पतञ्जलिनोक्ताः व्याधि स्त्यान संशय प्रमादा लस्या विरति भ्रान्ति दर्शना लब्धभूमिकत्वा नवस्थितत्वानि चित्तविक्षेपास्तेन्तराया इति व्याधि ज्वरादिः स्त्यान मकर्मण्यता संशय उभय कोटि स्पृक् ज्ञानं प्रमादः समाधावनवधानं आलस्यं काय बुद्धि गुरुत्वं अविरति र्विषयतृष्णा भ्रान्ति दर्शनं मिथ्या ज्ञानं अलब्ध भूमिकत्वं समाधि भूमेरलाभः अनवस्थितत्वं लब्धभूमेर्मन स्थिरङ्गित्वं धर्मान्तर योगेपि प्रौढिवादेनाह ।

÷ तत्राप्यविरोधः ॥ २१ ॥

अनावृत्तिश्रुतेरितिभावः श्रवण मनन निदिध्यासनानि सर्वैः कार्याणीति न नियम इत्याह ।

* अधिकारित्रैविध्यान्न नियमः ॥ २२ ॥

मृदुमध्या धिमात्रा अधिकारिणः तत्राधिमात्रस्य श्रवण मात्रान्मुक्तिः मध्यस्य द्वाभ्यां मन्दस्य त्रिभिः एतदेवोपपादयति

÷ दीर्घार्थमुत्तरेषां ॥ २३ ॥

उत्तरेषां मन्दानां मनन निदिध्यासने इतिशेषः ।

÷ स्थिरसुखमासनमिति न नियमः ॥ २४ ॥

इतिहेतोः स्वस्तिकादीनां न नियमः समाधिलक्षणमाह ।

÷ ध्यानंनिर्विषयंमनः ॥ २५ ॥

ध्यानं समाधिः सुषुप्तितः समाधेर्विशेषमाह ।

÷ उभयथाप्य विशेषश्चेन्नैवमुपरागनिरोधाद्विशेषः ॥ २६ ॥

वृत्तिनिरोधस्योभयत्र तुल्यत्वेपि समाधौ उपरागाख्य विषयवासना निरोधाद्विशेषः ।

÷ निःसंगेप्युपरागोऽविवेकात् ॥ २७ ॥

स्पष्टं कीदृगुपराग इत्याह ।

÷ जपास्फटिकयोरिव नोपरागःकिंत्वभिमानः ॥ २८ ॥

तयोर्हिसंसर्गादुपरागोयुक्तः आत्मनस्त्वसंसर्गान्नोपरागः किंत्वभिमानः ।

÷ ध्यान धारणाभ्यास वैराग्यादिभिस्तन्निरोधः ॥ २९ ॥

तन्निरोधः विषयोपरागनिरोधः आदिशब्दात्समाधिः ध्यानादीनामवधिमाह ।

* लयविक्षेपयोर्व्यावृत्त्येत्याचार्याः ॥ ३० ॥

लयः सुषुप्तिः विक्षेपः स्वप्नजागरिते अवस्थात्रयव्यावृत्ति पर्यन्तं ध्यानादीन्यनुष्ठेयानि तत्रचस्थाननियमो नास्तीत्याह ।

* नस्थाननियमश्चित्तप्रसादात् ॥ ३१ ॥

यत्रैव चित्तप्रसादस्तत्रध्यानाद्यनुष्ठेयं न नदीपुलिनादि नियमः ।

§ प्रकृतेराद्योपादानतान्येषांकार्यत्वश्रुते ३२

अन्येषामहदादीनां ।

* नित्यत्वेपिनात्मनोयोग्यत्वाभावात् ३३

नात्मनउपादानतागुणवत्व संसर्गित्वाभावादित्यर्थः आत्मनः स्वतएव कर्त्तृत्वभोक्तृत्वे किंप्रकृत्यु परागेणेतिदूषयति ।

* श्रुति विरोधान्न कुतर्कापसदस्यात्मलाभः ॥ ३४ ॥

कुतर्कयुक्तः अपसदः दुष्टासभा तत्र आत्मज्ञानं न युक्तं श्रुतिविरोधात् स्वतः कर्तृत्वादावनिर्मोक्षप्रसङ्गाच्च आत्मा कर्त्रादि रूपश्चेन्माकाङ्क्षीस्तर्हि मुक्ततां नहि स्वभावो भावानां व्यावर्त्तेतौष्ण्य वद्रवेरित्युक्तेः ।

* पारंपर्येपि प्रधानानुवृत्तिरणुवत् ॥३५॥

यथाघटादेर्मृत् पिण्डकार्यत्वेपि पारंपर्येण परमाणूनामुपादानत्वं तथाप्रधानस्येत्यर्थः ।

§ सर्वत्रकार्यदर्शनाद्विभुत्वं ॥ ३६ ॥

प्रधानस्येतिशेषः विपक्षेबाधकमाह ।

¶ गतियोगेप्याद्यकारणताहानिरणुवत् ३७॥

गतिः क्रियातत्प्रयोजकाविभुत्वयोगे अणूनामिवकार्यता स्यात् अणूनां कार्यत्वेच पराक्रान्त मन्यत्र ।

* प्रसिद्धाधिकंप्रधानस्य न नियमः ॥३८॥

प्रसिद्धाधिक्यं इष्टं यतोऽस्माकं पृथिव्यादीनिद्रव्याणोत्वादिर्न नियमः सत्वादयो न प्रकृति धर्माः किन्तुसत्व रजस्तमोरूपैव प्रकृति रित्याह ।

§ सत्वादीनामतद्धर्मत्वंतद्रूपत्वात् ॥३९।

सत्वादीनां सत्वरजस्तमसान्तद्रूपत्वात् तत्तादात्म्यात्

* निष्प्रयोजन प्रवृत्याभ्युपगमे मोक्षानुपपत्तेः ॥ ४० ॥

§ अनुपभोगेपिपुमर्थंसृष्टिः प्रधानस्योष्ट्रकुम्कुमवहनवत् ॥ ४१ ॥

* कर्मवैचित्र्यात्सृष्टिवैचित्र्यं ॥ ४२ ॥

स्पष्टं ।

* साम्यवैषम्याभ्यांकार्यद्वयं ॥ ४३ ॥

प्रकृतेः सदृशपरिणामात् प्रलयः महदादि भावेनविसदृशपरिणामात्सृष्टिः ।

* विमुक्त बोधान्न सृष्टिः प्रधानस्य लोकवत् ॥ ४४ ॥

विमुक्तबोधात् विमुक्तोयमिति बोधादेव मुक्तं प्रति-प्रधानस्य न सृष्टिः सृष्टिः प्रवृत्तिः लोकवत् लोकेहि कश्चि-त्कस्यचिद्धर्मोच्चार्थं यतते जातेच मोक्षे उदास्ते तथा-प्रधानं।

÷ नान्योपसर्पणेपि मुक्तोपभोगो निमित्ताभावात् ॥ ४५ ॥

अन्यस्यवद्धस्यपुरुषस्योपसर्पणेपितदर्थं सृष्टिप्रवृत्तावपि निमित्ताभावात् अविवेकाभावात्।

* पुरुष वहुत्वं व्यवस्थातः ॥ ४६ ॥

स्पष्टं।

§ उपाधिश्चेत्तत्सिद्धौपुनर्द्वैतं ॥ ४७ ॥

तत्सिद्धौ भेदसिद्धौ।

* द्वाभ्यामपि प्रमाणविरोधः ॥ ४८ ॥

द्वाभ्यांसत्यत्वासत्यत्वाभ्यां उपाधेः सत्यत्वे ऽद्वैतवोधक प्रमाणविरोधः उपाधेर सत्यत्वे तु तस्य भेदाव्यवस्थापकत्वेन भेद ग्राहि प्रत्यक्षादि विरोधः स्वमतत्वाद्द।

¶ द्वाभ्यामप्यविरोधान्नपूर्वमुत्तरंचसाधकाभावात् ॥ ४९ ॥

पूर्वमात्मैकत्वं उत्तरं उपाधि भेदात्मनानात्वं च न उभयत्रा-

पि साधिका भावात् किन्तुस्वत एव सत्यश्चात्मभेदः आत्मैक्य श्रुतिः आत्मत्वैकत्व विषयाऽभेद प्रत्यचन्तु अनौपाधिकसत्य भेद विषय मिति श्रु ति प्रत्यक्षा भ्याम विरोधात् ।

+ प्रकाशतस्तत्सिद्धौकर्मकर्तृविरोधः ॥५०॥

अद्वैतं कथं सिद्धेरदनात्मनात्मनावा नाद्यः जडत्वात् अन्त्ये प्रकाश्यत्व प्रकाशकत्वयोर्विरोधः ।

÷ जडव्यावृत्तोजडंप्रकाशयतिचिद्रूपः ॥५१॥

जडव्यावृत्तत्वमेव चिद्रूपत्वं नतु प्रकाश धर्मत्वं अतएव नेतीनेतीत्युच्यते न विधिमुखेन एवमानंदताप्यनानन्दव्यावृत्तिरेव नतु भाव रूपं सुखं अज्ञायमान सुखस्यादर्शनेन ज्ञाचादीनामावश्यकत्वे नमुक्तावपि द्वैतापत्तेः अलौकिकं सुखं मुक्तौस्वप्रकाश्यं च तदित्यत्रमानाभावः नन्वानंदरूपत्वे श्रुतिर्विद्यते नेत्याह ।

+ न श्रुति विरोधो रागिणां वैराग्या यत्तत्सिद्धेः ॥ ५२ ॥

रागिणांहि सुखेरागः मुक्तौच विरागः ततश्चविषय वैराग्यायात्मनोऽनानन्दस्यापि तत्सिद्धेरानन्दत्व कथनात् श्रुताविति शेषः वस्तुतश्चानन्दश्रुतिर्दुःखाभावे औपचारिकीतिभावः जगत्सत्यत्वमाह ।

+ जगत्सत्यमदुष्टकारण जन्यत्वाद्बाधका-भावात् ॥ ५३ ॥

दुष्टकारणजन्यं हि पीतः शङ्खइत्यादिज्ञानं न पीतः शङ्ख-

इत्यादि ज्ञानबाध्यं च तद्विषयोऽसत्यः जगतितुन तथेति भावः ।

\+ प्रकारान्तरासम्भवात्सदुत्पत्तिः ॥५४॥

प्रकारान्तरञ्च पूर्वमेवनिरस्तं ।

\+ अहंकारःकर्त्ता न पुरुषः ॥५५॥

अहंकारी बुद्धिः ननुसत्यामपि विवेकख्यातौ सुखादिभोगो दृश्यते स कथं तत्राह ।

\+ चिदवसानाभुक्तिस्तत्कर्मार्जितत्वात् ॥५६॥

चित् देहादि ज्ञान मवसान मवधिर्यस्याः यावद्देहादि भानन्तावद्भोग इत्यर्थः तदिति प्रारब्ध मुच्यते बुद्धिस्थत्वात् तस्यतावदेवचिरंयावन्नविमोक्ष्येथ संपत्स्ये इत्यादि श्रुतेः ज्ञानिनोपि प्रारब्ध कर्मफलभोग आवश्यक इति भावः ।

÷ चन्द्रादिलोकेप्यावृत्तिर्निमित्तसद्भावात् ॥५७॥

निमित्तम विवेकादि ।

\+ लोकस्य नो पदेशात्सिद्धिःपूर्ववत् ॥५८॥

लोकस्यसम्प्राधि कारिणः उपदेशात् श्रवणमात्रात् नमुक्तिः किन्तु पूर्वं यथोक्तं तथैतद्बोध्य मनननिदिध्यासने अपेक्षित इत्यर्थः तर्हिश्रुत्वा मुच्यत इति कथ सुपपद्यते तत्राह ।

\+ पारंपर्येण तत्सिद्धौ विमुक्तिश्रुतिः ॥५९॥

तत्सिद्धौश्रवणमात्र सिद्धौविमुक्तिश्रुतिः पारंपर्येणउतमाधिकारिविषयावा ।

* गतिश्रुतेश्च व्यापकत्वेऽप्युपाधियोगाद्भोगदेशकाललाभो व्योमवत् ॥ ६० ॥

व्यापकत्वेप्यात्मन: उपाधियोगाद्देहादियोगात् भोगदेशकालयोग: यथाव्योम घटादौगच्छतीव तथात्मापि देहावच्छिन्नोगच्छतोवेति विशिष्ट देशकाल सम्बन्ध्युपभोग भाक्भवति कुत: गतिश्रुते: ऊर्ध्वं गच्छन्ति सत्वस्था इत्यादे: ।

+ अनधिष्ठितस्य पूतिभाव प्रसंगान्न तत्सिद्धि: ॥ ६१ ॥

न तत्सिद्धि: नानधिष्ठोनसिद्धि: अदृष्टवशादेव पूतिभावो न भविष्यतीत्यतआह ।

÷ अदृष्टद्वाराचेदसंवद्धस्यतदसंभवात् जलादिवदंकुरे ॥ ६२ ॥

वीजावस्थामारभ्य आत्मानाधिष्टत्ति किन्तुअदृष्टद्वारा इति चेत्न असंवद्धस्या दृष्टस्यतद सम्भवात्कारणत्वासम्भवात् अयमर्थ: अवश्यमदृष्टस्य तत्रसम्बन्धो वाच्य: सच स्वाश्रय संयोग विशेषादि रूपएवेति जलादि वदिति दृष्टान्त: यथा जलादि अंकुर जनकमपि वीजासंवद्धमंकुरं न जनयतितद्वत् ।

* निर्गुणत्वात्तदसंभवादहंकारधर्माह्येते ॥ ६३ ॥

निर्गुणत्वादात्मन: तदसम्भवात् तच्छिन्नसम्भवात् एते

धर्मादयो ऽहंकारधर्माः कार्यकारणयोर भेदात् बुद्धिधर्मा एवाहंकारधर्मा इत्युक्तं ।

+ विशिष्टस्य जीवत्वमन्वयव्यतिरेकात् ॥६४॥

जीवत्वं कर्त्तृत्वभोक्तृत्वविशिष्टस्य देहादि विशिष्टस्य नतु स्वरूपेण कीटस्थस्यहानेः अन्वयव्यतिरेकाभ्यां च देहाभिमानिन एवकर्तृत्वभोक्तृत्वो पलम्भात् ॥

+ अहंकारकर्त्रधीनाकार्य सिद्धिर्नेश्वराधीनाप्रमाणाभावात् ॥६५॥

प्रकृतर्भेदान्महतो हंकारइत्युक्तोऽहंकारस्तदभिमोयः कर्त्तातदधीनाकार्यस्यतन्मात्रादेःसिद्धिः नेश्वराधीना कार्यं त्वस्यचेतनकार्यत्वव्याप्यत्वे प्रमाणाभावात् एत्तदेवस्पष्टयति ।

+ अदृष्टोद्भूतिवत्समानत्वं ॥ ६६ ॥

नदृष्टः कर्त्ता यस्य चित्यंकुरादेस्तस्योद्भूति वत्यतिस्त स्यामिवससमानत्वं चेतनकर्तृभावस्यांचित्यंकुरादौह्नि नचेतनः कर्त्तास्तिअनुपलब्धेः ।

+ तथातन्मात्रेष्वपिमहतोन्यत् ॥ ६७ ॥

अहंकारस्य कार्यं महतोन्यत् नहिस्वं कारणं स्वकार्यं भवति ।

+ कर्मनिमित्तःप्रकृतेः स्वस्वामिभावोप्यनादिर्बीजांकुरवत् ॥ ६८ ॥

पुरुषस्येति पूरणीयं स्पष्टमन्यत् ।

\+ अविवेकनिमित्तोवा पञ्चशिखः ॥ ६९॥

अविवेक निमित्त इति बहुव्रीहिः एकदेशिमत माह

\+ लिंगशरीरनिमित्तक इति सनंदनाऽऽचार्य्यः ॥७०॥

यावत्स्थूलशरीरे सूक्ष्मशरीरमस्तितावत्प्रकृतिपुरुषयोः स्वस्वामिसंबंधइति स्वमतमाह ।

\+ यद्वातद्वातदुच्छितिः पुरुषार्थस्तदुच्छित्तिः पुरुषार्थः ॥ ७१ ॥

यत्यतदित्यव्ययंहेतौ यतस्ततः स्वस्वामिभावोस्तु प्रकृति-पुरुषयोः तस्यतु बन्धहेतुत्वात् तदुच्छितिः पुरुषार्थः इतिमम मतं षोष्ठःऽध्याय समाप्तश्चर्या । इति वेदांतिमहादेवकृते सांख्यप्रवचनसूत्रवृत्तिसारे तत्त्वऽध्यायः षष्टः । ६ ॥

सूत्रसंख्या ॥ ५२७ ॥



